अबिभरुः । बिभृयात् । भ्रियात् । भृषीष्ट । अभार्षीत् । अभृत । माङ् १०८८ माने शब्दे च ।

### २४९७ । ई हल्यघोः । (६-४-११३)

आभ्यस्तयोरात ईत्स्यात्सार्वधातुके क्ङिति हलि न तु घुसंज्ञकस्य । मिमीते । 'आभ्यस्तयोः–' (सू २४८३) इत्याल्लोपः । मिमाते । मिमते । प्रण्यमास्त । ओ हाङ् २०८९ गतौ । जिहीते । जिहाते । जिहते । जहे । हाता । हास्यते । ओ हाक् १०८९ त्यागे । परस्मैपदी । जहाति ।

---

बभ्राथे । बभृढ्वे । बभ्रे । बभृवहे । बभृमहे । भर्ता । भरिष्यति । भरिष्यते । बिभर्तु–बिभृतात् । बिभृताम् । बिभ्रतु । इति सिद्धवत्कृत्य आह । **बिभृहीति** ॥ हेरपित्त्वेन ङित्वाद्गुणनिषेध इति भावः । बिभृतात् । बिभृतम् । बिभृत इति सिद्धवत्कृत्य आह । **बिभराणीति** ॥ आट पित्त्वेन ङित्वाभावान्न गुणनिषेध इति भावः । बिभराव । बिभराम । लङ्याह । **अबिभरिति** ॥ अबिभृ त् इति स्थिते गुणे रपरत्वे हल्ङ्यादिलोपे रेफस्य विसर्ग इति भावः । **अबिभरुरिति** ॥ अभ्यस्तत्वात् झेर्जुस् 'जुसि च' इति गुणः । अबिभः । अबिभृतम् । अबिभृत । अबिभरम् । अबिभृव । अबिभृम । अबिभृत । अबिभ्राताम् । अबिभ्रत । अबिभृथाः । अबिभ्राथाम् । अबिभृध्वम् । अबिभ्रि । अबिभृवहि । अबिभृमहि । आशीर्लिङ्याह । **भ्रियादिति** ॥ 'रिङ्शयग्लिङ्क्षु' इति रिङ् । आत्मनेपदे आशीर्लिङ्याह । **भृषीष्टेति** ॥ 'उश्च' इति कित्त्वान्न गुणः । **अभार्षीदिति** ॥ अनिट्त्वान्न सिज्लोपः । सिचि वृद्धिः । रपरत्वमिति भावः । अभार्ष्टामित्यादि । आत्मनेपदे लुङ्याह । **अभृतेति** ॥ 'ह्रस्वादङ्गात्' इति सिचो लुक् । अभृषातामित्यादि । **माङ् माने इति** ॥ अनिट् । ङित्त्वादात्मनेपदी । श्लौ द्वित्वे 'भृञामित्' इति अभ्यासस्य इत्त्वे मि मा ते इति स्थिते । **ई हल्यघोः** ॥ ई इति लुप्तप्रथमाकम् । 'श्नाभ्यस्तयोरातः' इत्यनुवर्तते । 'गमहन' इत्यतः क्ङितीति 'अत उत्सार्वधातुके' इत्यतः सार्वधातुके इति चानुवर्तते । तदाह । **श्नाभ्यस्तयोरित्यादिना । आल्लोपः इति** ॥ अजादौ क्ङिति सार्वधातुके इति शेषः । **मिमते इति** ॥ अभ्यस्तत्वाददादेशः । मिमीषे । मिमाथे । मिमीध्वे । मिमे । मिमीवहे । मिमीमहे । ममे । ममाते । ममिरे । ममिषे । ममाथे । ममिध्वे । ममे । ममिवहे । ममिमहे । माता । मास्यते । मिमीताम् । मिमीष्व । मिमाथाम् । मिमीध्वम् । मिमै । मिमावहै । मिमामहै । अमिमीत । अमिमाताम् । अमिमत । अमिमीथाः । अमिमाथाम् । अमिमीध्वम् । अमिमि । अमिमीवहि । अमिमीमहि । मिमीत । मिमीयाताम् । मिमीरन् । मिमीथाः । मिमीयाथाम् । मिमीध्वम् । मिमीय । मिमीवहि । मिमीमहि । मासीष्ट । अमास्त । अमासाताम् । अमासत । अमास्थाः । अमासाथाम् । अमाध्वम् । अमासि । अमास्वहि । अमास्महि । अमास्यत । **ओ हाङ् गताविति** ॥ अनिट् । ङित्त्वादात्मनेपदी । 'भृञामित्' इति इत्त्वम् । माङ्धातुवद्रूपाणि । अभ्यासे चुत्वं

## २४९८। जहातेश्च। (६-४-११६)

इत्स्याद्वा हलादौ क्ङिति सार्वधातुके। पक्षे ईत्त्वम्। जहितः—जहीतः। जहति। जहौ। जहितात्।

## २४९९। आ च हौ (६-४-११७)

जहातेर्हौ परे आ स्याच्चादिदीतौ। जहाहि—जहिहि—जहीहि। अजहात्। अजहुः। अजहाः।

## २५००। लोपो यि। (६-४-११८)

जहातेरालोपः स्याद्यादौ सार्वधातुके। जह्यात्। 'एर्लिङि' (सू २३७४) हेयात्। अहासीत्। डु दाञ् १०९१ दाने। प्रणिददाति। दत्तः। ददति। दत्ते। ददौ। 'घ्वसोः—' (२४७१) इत्येत्त्वाभ्यासलोपौ। देहि।

---

विशेष॰। तदाह। **जिहीते इत्यादि** ॥ इति भृञादयस्त्रयो गता। **ओ हाक् त्यागे इति** ॥ अनिट्। ओकारः ककारश्च इत्। **जहातीति** ॥ श्लौ द्वित्वे अभ्यासचुत्वमिति भाव.। तस्मादौ 'श्नाभ्यस्तयोरात.' इति नित्यमीत्त्वे प्राप्ते। **जहातेश्च** ॥ 'इद्दरिद्रस्य' इत्यतः इदिति 'भियोऽन्यतरस्याम्' इत्यत अन्यतरस्यामिति चानुवर्तते। 'गमहन' इत्यतः क्ङितीति, 'ई हल्यघो.' इत्यतः हलीति च। इत्यभिप्रेत्य शेष पूरयति। **इत्स्याद्वेति**। **जहतीति** ॥ अभ्यस्तत्वाददादेशे 'श्नाभ्यस्तयो.' इत्याल्लोपः। **जहाविति** ॥ जहतु॰। जहुः। जहिथ—जहाथ। जहथुः। जह। जहौ। जहिव। जहिम। हाता। हास्यति। **जहितादिति** ॥ जहिताम्—जहीताम्। जहतु। **आ च हौ** ॥ आ इति लुप्तप्रथमाकम्। **जहातेरिति** ॥ 'जहातेश्च' इत्यतः तदनुवृत्तेरिति भाव। **चादिदीताविति** ॥ 'इद्दरिद्रस्य' इत्यत. 'ई हल्यघोः' इत्यतश्च तयोरिह चकारेणानुकर्षादिति भावः। जहितात्—जहीतात्। जहितम्—जहीतम्। जहित—जहीत। जहानि। जहाव। जहाम। लङ्याह। **अजहादिति** ॥ अजहिताम्—अजहीताम्। अजहुः। **अजहाः इति** ॥ अजहितम्—अजहीतम्। अजहित—अजहीत। अजहाम्। अजहिव—अजहीव। अजहिम—अजहीम। **लोपो यि** ॥ 'जहातेश्च' इत्यतो जहातेरिति 'श्नाभ्यस्तयोरात.' इत्यतः आत इति, 'अत उत्सार्वधातुके' इत्यत सार्वधातुके इति चानुवर्तते। यि इति सप्तम्यन्त सार्वधातुकविशेषणम्। तदादिविधि.। तदाह। **जहातेरित्यादिना** ॥ 'जहातेश्च' इत्यस्यापवाद.। आशीर्लिङ्याह। **एर्लिङीति**। **अहासीदिति** ॥ 'यमरम' इति सगिटौ। अहास्यत्। डु दाञ् उभयपदी। अनिट्। **प्रणिददातीति** ॥ 'नेर्गद' इति णत्वत्। **दत्तः इति** ॥ ददा तस् इति स्थिते अघोरिति पर्युदासादित्त्वाभावे 'श्नाभ्यस्तयो.' इत्याल्लोपः। **ददतीति** ॥ अभ्यस्तत्वाददादेशे 'श्नाभ्यस्तयोः' इत्याल्लोप इति भाव। ददासि। दत्थ.। दत्थ। ददामि। दद्व.। दद्मः। **दत्ते इति** ॥ ददाते। ददते। दत्से। ददाथे। दद्ध्वे। ददे। दद्वहे। दद्महे। **ददौ इति** ॥

अददात् । अदत्ताम् । अददुः । दद्यात् । देयात् । अदात् । अदाताम् । अदुः । अदित । डु धाञ् १०९५ धारणपोषणयोः 'दानेऽपि' इत्येके । प्रणिदधाति ।

## २५०१ । दधस्तथोश्च । (८-२-३८)

**द्विरुक्तस्य झषन्तस्य धाधातोर्बशो भष् स्यात्तथयोः परयोः स्ध्वोश्च परतः।** 'वचनसामर्थ्यादालोपो न स्थानिवत्' इति वामनमाधवौ । वस्तुतस्तु 'पूर्वत्रासिद्धे न स्थानिवत्' धत्तः । दधति । धत्थः । धत्थ । दध्वः । दध्मः । धत्ते । धत्से । धद्ध्वे । धेहि । अधित ।

---

ददतु । ददुः । ददिथ–ददाथ । ददथुः । दद । ददौ । ददिव । ददिम । ददे । ददाते । ददिरे । ददिषे । ददाथे । ददिध्वे । ददे । ददिवहे । ददिमहे । दाता । दास्यति । दास्यते । ददातु–दत्तात् । दत्ताम् । ददतु । इति सिद्धवत्कृत्य देहि इत्यत्र आह । **घ्वसोरिति** ॥ दत्तात् । दत्तम् । दत्त । ददानि । ददाव । ददाम । दत्ताम् । ददाताम् । ददताम् । दत्स्व । ददाथाम् । दद्ध्वम् । ददै । ददावहै । ददामहै । लङयाह । **अददादिति । अददुरिति** ॥ अभ्यस्तत्वात् जुस् । अददा । अदत्तम् । अदत्त । अददाम् । अदद्व । अदद्म । विधिलिङयाह । **दद्यादिति** ॥ 'श्नाभ्यस्तयोः' इत्यालोपः । आशीर्लिङि तु 'एर्लिङि' इत्येत्त्वमभिप्रेत्य आह । **देयादिति** ॥ दासीष्ट । लुङयाह । **अदादिति** ॥ 'गातिस्था' इति सिचो लुगिति भावः । अदाः । अदातम् । अदात । अदाम् । अदाव । अदाम । लुङयात्मनेपदे आह । **अदितेति** ॥ अदा स् त इति स्थिते 'स्थाघ्वोरिच्च' इति दाधातोरन्त्यस्य इकारः सिचः कित्त्वञ्च । कित्त्वान्न गुणः । 'ह्रस्वादङ्गात्' इति सिचो लुगिति भावः । अदिषाताम् । अदिषत । अदिथाः । अदिषाथाम् । अदिढ्वम् । अदिषि । अदिष्वहि । अदिष्महि । अदास्यत् । अदास्यत । डु धाञ् । ञित्त्वादुभयपदी । अनिट् । **प्रणिदधातीति** ॥ 'नेर्गद' इति णत्वम् । तासि श्लौ द्वित्वे अभ्यासजश्त्वे 'श्नाभ्यस्तयोः' इत्यालोपे दध् तस् इति स्थिते । **दधस्तथोश्च** ॥ धाधातोः कृतद्वित्वस्य दधा इत्यस्य दधः इति षष्ठ्यन्तम् । 'एकाचो बशः' इत्यतः झषन्तस्य बशो भष् इत्यनुवर्तते । त थ् अनयोर्द्वन्द्वात् सप्तमीद्विवचनम् । तकारादकार उच्चारणार्थः । तकारथकारयोरिति लभ्यते । चकारात् स्ध्वोरिति समुच्चीयते । सकारे ध्वशब्दे चेति लभ्यते । तदाह । **द्विरुक्तस्येत्यादिना** ॥ तथाच अभ्यासे दकारस्य धकारः । तकारपरकत्वात् । न तु 'श्नाभ्यस्तयोरालोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वान्न तकारपरकत्व, नापि झषन्तत्वमित्यत आह । **वचनसामर्थ्यादिति** ॥ **वस्तुतस्त्विति** ॥ भष्भावस्य पूर्वत्रासिद्धीयत्वादेव तस्मिन् कर्तव्ये आलोपस्य स्थानिवत्त्वाप्रसक्तेर्वचनसामर्थ्याश्रयणक्लेशो वृथेति भावः । **धत्तः इति** ॥ धस्य चर्त्वेन त इति भावः । **दधतीति** ॥ 'अदभ्यस्तात्' इत्यदादेशे 'श्नाभ्यस्तयोः' इत्यालोपः । **धत्थः इति** ॥ थकारपरकत्वात् भष् । धत्थ । दधामि । **दध्वः इति** ॥ परनिमित्ताभावान्न भष् । दध्मः । **धत्ते इति** ॥ दधाते । दधते । **धत्से इति** ॥ सकारपरकत्वाद्भषिति भावः। दधाथे । **धद्ध्वे इति**॥ दद् ध्वे इति स्थिते ध्वशब्दपरकत्वाद्भषिति भावः।

अथ त्रयः स्वरितेतः । णिजिर् १०९६ शौचपोषणयोः ।

## २५०२ । निजां त्रयाणां गुणः श्लौ । (७-४-७५)

णिजिर् विजिर् विष्लृ एषामभ्यासस्य गुणः स्याच्छलौ । नेनेक्ति । नेनिक्तः । नेनिजति । नेक्ता । नेक्ष्यति । नेनेक्तु । नेनिग्धि ।

## २५०३ । नाभ्यस्तस्याचि पिति सार्वधातुके । (७-३-८७)

लघूपधगुणो न स्यात् । नेनिजानि । अनेनेक् । अनेनिक्ताम् । अनेनिजुः । नेनिज्यात् । निज्यात् । अनिजत्—अनैक्षीत् । अनिक्त । विजिर् १०९४

---

दधे । दध्वहे । दध्महे । दधौ । दधे । धाता । धास्यति । धास्यते । दधातु—धत्तात् । धत्ताम् । दधतु । **धेहीति** ॥ 'घ्वसो.' इत्येत्त्वाभ्यासलोपाविति भावः । धत्तात् । धत्तम् । धत्त । दधानि । दधाव । दधाम । धत्ताम् । दधाताम् । दधताम् । धत्स्व । दधाथाम् । धद्ध्वम् । दधै । दधावहै । दधामहै । अधात् । अधत्त । दध्यात् । धासीष्ट । अधासीत् । **अधितेति** ॥ 'स्थाघ्वोरिच्च' इति इत्त्वे 'ह्रस्वादङ्गात्' इति सिचो लुगिति भावः । अधास्यत् । अधास्यत । णिजिर् धातुः अनिडयं णोपदेशः इरित् । इकारस्य प्रत्येकमित्त्वाभावान्न नुम् । इकारस्य स्वरितत्वप्रतिज्ञाबलादात्मगे फले आत्मनेपदम्भवत्येव । तस्मादयमप्युभयपदी । एवं विजिरपि ज्ञेयः । **निजां त्रयाणाम्** । निजामिति बहुवचनात्तदादीनाङ्ग्रहणम् । 'अत्र लोप' इत्यतः अभ्यासस्येत्यनुवर्तते । तदाह । **णिजिर् इत्यादिना । नेनेक्तीति** ॥ श्लौ द्वित्वे हलादिशेषे उत्तरखण्डस्य तिपमाश्रित्य गुणे पूर्वखण्डस्यानेन गुणे चो. कुत्वमिति भावः । अभ्यस्तत्वाददादेश मत्वा आह । **नेनिजतीति** ॥ नेनेक्षि । नेनिक्थः । नेनिक्थ । नेनेज्मि । नेनिज्वः । नेनिज्मः । नेनिक्ते । नेनिजाते । नेनिजते । नेनिक्षे । नेनिजाथे । नेनिग्ध्वे । निनिजे । नेनिज्वहे । नेनिज्महे । निनेज । निनिजतुः । निनेजिथ—निनेक्थ । निनिजथुः । निनिज । निनेज । निनिजिव । निनिजिम । निनिजे । निनिजाते । निनिजिरे । निनिजिषे । निनिजाथे । निनिजिध्वे । निनिज्जे । निनिजिवहे । नेक्ता । नेक्ष्यति । नेनेक्तु—नेनिक्तात् । नेनिक्ताम् । नेनिजतु । **नेनिग्धीति** ॥ अपित्त्वेन ङित्त्वान्न गुणः । हेर्धिः । नेनिक्तात् । नेनिक्तम् । नेनिक्त । 'आडुत्तमस्य' इति पित्त्वेन अङित्त्वाल्लघूपधगुणे प्राप्ते । **नाभ्यस्तस्याचि** ॥ 'मिदेर्गुणः' इत्यतो गुण इति 'पुगन्त' इत्यतो लघूपधस्येति चानुवर्तते इत्यभिप्रेत्य शेषम्पूरयति । **लघूपधगुणो न स्यादिति । नेनिजानीति** ॥ नेनिजाव । नेनिजाम । नेनिक्ताम् । नेनिजाताम् । नेनिजताम् । नेनिक्ष्व । नेनिजाथाम् । नेनिग्ध्वम् । नेनिजै । नेनिजावहै । नेनिजामहै । लङि परस्मैपदे आह । **अनेनेगिति** ॥ **अनेनिजुरिति** ॥ अभ्यस्तत्वाज्जुसिति भावः । अनेनेक् । अनेनिक्तम् । अनेनिक्त । अनेनिजम् । 'नाभ्यस्तस्य' इति न गुणः । अनेनिज्व । अनेनिज्म । निक्षीष्ट । लुङयाह । **अनिजदिति** ॥ इरित्त्वादङिति भावः । **अनिक्तेति** ॥ 'झलो झलि' इति सिज्लोपः ।

पृथग्भावे । वेवेक्ति—वेविक्ते । विवेजिथ । अत्र 'विज इट्' (सू २५३६) इति ङित्त्वं न 'ओ विजी' इत्यस्यैव तत्र ग्रहणात् । 'णिजिविजी' रुधादावपि। विष्लृ १०९५ व्याप्तौ । वेवेष्टि—वेविष्टे । लृदित्त्वादङ् । अविषत् । तङि क्सः । अजादौ 'क्सस्याचि' (सू २३३७) इत्यल्लोपः । अविक्षत । अविक्षाताम् । अविक्षन्त ।

अथ आगणान्तात्परस्मैपदिनश्छान्दसाश्च । घृ १०९६ क्षरणदीप्त्योः । 'जिघर्म्यग्निं हविषा घृतेन' । 'भृञामित्' (सू २४९६)। बहुलं छन्दसि' (सू (३५९८) इतीत्त्वम् । हृ १०९७ प्रसह्यकरणे । अयं स्रुवोऽभिजिहर्ति होमान् । ऋ १०९८ सृ १०९९ गतौ । बहुलं छन्दसि (३५९८) इत्येव सिद्धे 'अर्तिपिपर्त्योश्च' (सू २४९३) इतीत्त्वविधानादयं भाषायामपि । 'अभ्यास-

अविक्षाताम् इत्यादि । विजिरपि णिजिर्वत् । **अत्रेति** ॥ थलि इट्पक्षे 'विज इट्' इति विहित ङित्त्व नेत्यर्थ । अतो न गुणनिषेध इति भावः । **ओ विजी इत्यस्यैवेति** ॥ व्याख्यानादिति भाव । **रुधादावपीति** ॥ ततश्च 'रुधादिभ्य. श्नम्' इति श्नम्विकरणावपि ताविति भाव । **विष्लृ व्याप्तौ इति** ॥ लृदित् उभयपदी अनिट् । णिजेरिव रूपाणि । **वेवेष्टीति** ॥ ष्टुत्वेन तकारस्य टः । सिपि 'षढोः' इति षस्य कत्वम् । वेवेक्षि । वेविष्टः । वेविड्ढि । **अविषदिति** ॥ लृदित्त्वादङिति भावः । **तङि क्सः इति** ॥ 'शल इगुपधात्' इत्यनेनेति भावः । **आगणान्तादिति** ॥ जुहोत्यादिगणसमाप्तिपर्यन्तमित्यर्थः । घृधातुरनिट् । तिपि श्लौ द्वित्वे अभ्यासकार्ये गुणे रपरत्वे जघर्ति । जघृत । जघ्रति । 'जिघर्म्यग्नि हविषा घृतेन' इति बह्वृचमन्त्रपाठ. । 'जिघर्म्यग्नि मनसा घृतेन' इति तैत्तिरीयपाठः । अत्र इत्त्वमभ्यासस्य आह । **भृञामिदिति** ॥ ननु तत्र त्रयाणामेव ग्रहणमित्यत आह । **बहुळमिति** ॥ इत्त्व छान्दसमिति भावः । जघार । जघ्रतुः । जघर्थ । जघ्र । जघ्रिव । घरिष्यति । जघर्तु—जघृतात् । जघ्रतु । जघृहि । जघराणि । अजघः । अजघृताम् । अजघरु. । अजघरम् । अजघृव । जघृयात् । घ्रियात् । अघार्षीत् । अघरिष्यत् । **हृ प्रसह्यकरणे इति** ॥ घृधातुवद्रूपाणि । **अयं स्रुवो अभिजिहर्ति होमानिति** ॥ स्रुवे साद्यमाने याजमानो मन्त्रः । अत्रापि अभ्यासस्य इत्त्व छान्दसमिति भावः । **ऋ सृ गताविति** ॥ इमावनिटौ । तत्र ऋधातो. छान्दसत्वेऽपि लोकेऽपि क्वचित् प्रयोगं समर्थयति । **बहुळमिति** ॥ 'भृञामित्' । 'अर्तिपिपर्त्योश्च' 'बहुळ छन्दसि' इति सूत्रस्थिति. । तत्र बहुळञ्छन्दसीत्येव ऋधातोरित्त्वसिद्धे. 'अर्तिपिपर्त्योश्च' इत्यर्तिग्रहणात् लोकेऽपि ऋधातोः श्लुविकरणस्य प्रयोगो विज्ञायते इत्यर्थः । एतच्चात्रैव सूत्रे भाष्ये स्पष्टम् । अत एव भाष्यात् श्लुविकरणस्यैव ऋधातो. 'अर्तिपिपर्त्योश्च' इत्यत्र ग्रहणम् । पिपर्तिसाहचर्याच्च, श्लावित्यस्य अभ्यासग्रहणस्य चानुवृत्तेश्चेत्यलम् । **अभ्यासस्यासवर्णे इति** ॥ शपः श्लौ ऋ ति इति स्थिते द्वित्वे उरदत्त्वम्बाधित्वा 'अर्तिपिपर्त्योश्च' इत्यभ्या-

स्यासवर्णे (सू २२९०) इतीयङ् । इयर्ति । इयृतः । इयृति । आर । आरतुः । 'इडत्त्यर्ति—' (सू २३८४) इति नित्यमिट् । आरिथ । अर्ता । अरिष्यति । इयराणि । ऐयः । ऐयृताम् । ऐयरुः । इयृयात् । अर्यात् । आरत् । ससर्ति । भस ११०० भर्त्सनदीप्त्योः । बभस्ति । 'घसिभसोर्हलि—' (सू ३५५०) इत्युपधालोपः । 'झलो झलि' (सू २२८१) इति सलोपः । बब्धः । बप्सति ।

---

सऋकारस्य इत्त्वे रपरत्वे हलादिशेषे उत्तरखण्डस्य ऋकारस्य गुणे रपरत्वे इ अर् ति इति स्थिते 'अभ्यासस्यासवर्णे' इति इयडि इयर्ति इति रूपमित्यर्थः । **इयृतः इति** ॥ पूर्ववदेव द्वित्वादि । तसः अपित्त्वेन ङित्त्वाद्गुणनिषेध इति भावः । **इयृतीति** ॥ पूर्ववदेव द्वित्वादि । अभ्यस्तत्वाददादेशः । ङित्त्वान्न गुण । उत्तरखण्डस्य ऋकारस्य यण् रेफ इति भावः । इयर्षि । इयृथः । इयर्मि । इयृव । इयृमः । लिड्याह । **आरेति** ॥ थलि 'अचस्तास्वत्' इति 'ऋतो भारद्वाजस्य' इति नित्यमिण्निषेधे प्राप्ते ह । **इडत्त्यर्तीति । नित्यमिडिति** ॥ आरिथ । आरिम । **अर्तेति** ॥ अनिट्त्वादिति भाव । **अरिष्यतीति** ॥ 'ऋद्धनोः स्ये' इति इडिति भावः । इयर्तु–इयृतात् । इयृताम् । इयृतु । इयृहि–इयृतात् । इयृतम् । इयृत । **इयराणीति** ॥ आट पित्त्वेन अङित्त्वान्न गुणनिषेध इति भावः । इयराव । इयराम । लङयाह । **ऐयः इति** ॥ श्लौ ऋ त् इति स्थिते द्वित्वे अभ्यासस्य इत्त्वे रपरत्वे हलादिशेषे इयडि उत्तरखण्डस्य गुणे रपरत्वे च हल्ङ्यादिलोपे रेफस्य विसर्गे इयः इति स्थिते आटि वृद्धौ ऐयः इति रूपमिति भावः । नच लावस्थायामडिति पक्षे वृद्धौ रपरत्वे आर् त् इति स्थिते द्वित्वे हलादिशेषे सवर्णदीर्घे हल्ङयादिलोपे रेफस्य विसर्गे आः इति स्यादिति शङ्क्यम् । बहुल छन्दस्यमाड्योगेऽपि' इति बहुलग्रहणेनाल लावस्थायामाडित्यस्यानाश्रयणादित्याहुः । **ऐयरुरिति** ॥ ऐयः । ऐयृतम् । ऐयृत । ऐयरम् । ऐयृव । ऐयृम । विधिलिङयाह । **इयृयादिति** ॥ यासुटो ङित्त्वाद्गुणनिषेध इति भावः । इयृयाताम् इत्यादि । आशीर्लिङयाह । **अर्यादिति** ॥ 'अकृत्सार्वधातुकयोः' इति दीर्घः प्राप्तः । तं बाधित्वा 'रिङ् शयग्लिङ्क्षु' इति रिङ् प्राप्तः । तम्बाधित्वा 'गुणोऽर्तिसंयोगाद्योः' इति गुण इति भावः । लुङयाह । **आरदिति** ॥ 'सर्तिशास्त्यर्तिभ्यश्च' इत्यङि 'ऋदृशोऽङि' इति गुण इति भाव । आरिष्यत् । तदेव ऋधातु निरूप्य सृधातु निरूपयति । **ससर्तीति** ॥ ससृत । सस्रति । इत्यादि सुगमम् । ससार । ससर्थ । ससृव । सर्ता । सरिष्यति । ससर्तु । अससः । अससृताम् । अससरुः । ससृयात् । स्रियात् । असरत् । **भस भर्त्सने इति** ॥ अय सेट् । **बभस्तीति** ॥ श्लौ भस् ति इति स्थिते द्वित्वे अभ्यासजश्त्वमिति भावः । बभस् तस् इति स्थिते आह । **घसिभसोरिति** ॥ 'घसिभसोर्हलि च' इत्यस्यायमर्थः । छन्दसि अनयोरुपधाया लोपः स्यात्, हलादावजादौ च क्ङिति परे इति । तथाच बभस् तस् इत्यत्र उपधालोपे 'झलो झलि' इति सकारलोपे तकारस्य 'झषस्तथोः' इति धत्वे भकारस्य जश्त्वमिति भावः । **बप्सतीति** ॥ अभ्यस्तत्वाददादेशे बभस् अति इति स्थिते 'घसिभसोः' इत्युपधालोपे भकारस्य चर्त्वमिति भावः ।

कि ११०१ ज्ञाने । चिकेति । तुर ११०२ त्वरणे । तुतोर्ति । तुतूर्तः । तुतुरति । धिष ११०३ शब्दे । दिधेष्टि । दिधिष्टः । धन ११०४ धान्ये । दधन्ति । दधन्तः । दधनति । जन ११०५ जनने । जजन्ति ।

## २५०४ । जनसनखनां सञ्झलोः । (६-४-४२)

---

बभस्सि । बब्ध । बब्ध । बभस्मि । बप्स्व. । बप्स्मः । बभास । बप्सतुः । बप्सुः । बभासिथ । बप्सथुः । बप्स । बभास–बभस । बप्सिव । बप्सिम । भसिता । भसिष्यति । बभस्तु–बब्धात् । बब्धाम् । बप्सतु । बाब्धि–बब्धात् । बब्धम् । बब्ध । बभसानि । बभसाव । बभसाम । अबभः । अबब्धाम् । अबप्सुः । अबभ. । अबब्धम् । अबब्ध । अबप्सम् । अबप्स्व । बप्स्यात् । भस्यात् । अभासीत्–अभसीत् । अभसिष्यत् । **कि ज्ञाने । चिकेतीति** ॥ किधातोस्तिपि श्लौ द्वित्वे अभ्यासकुत्वे उत्तरखण्डस्य गुण इति भाव. । चिकित. । चिक्यति । चिकेषि । चिकिथः । चिकिथ । चिकेमि । चिकिवः । चिकाय । चिक्यतुः । चिकयिथ–चिकेथ । चिक्यिव । केता । केष्यति । चिकेतु–चिकितात् । चिकिताम् । चिक्यतु । चिकिहि । चिकयानि । अचिकेत् । अचिकिताम् । अचिकयुः । अचिकेः । अचिकयम् । अचिकिव । चिकियात् । कीयात् । अकैषीत् । अकेष्यत् । **तुर त्वरणे इति** ॥ **तुतूर्तः इति** ॥ 'हलि च' इति दीर्घः । तुतोर्षि । तुतूर्थः । तुतूर्थ । तुतोर्मि । तुतूर्व । तुतोर । तुतुरथु. । तुतोरिथ । तुतुरिव । तोरिता । तोरिष्यति । तुतोर्तु–तुतूर्तात् । तुतूर्ताम् । तुतुरतु । तुतूर्हि । तुतोराणि । अतुतोः । अतुतूर्ताम् । अतुतुरुः । अतुतोः । अतुतोरम् । अतुतूर्व । तुतूर्यात् । तूर्यात् । अतोरीत् । अतोरिष्यत् । **धिष शब्दे सेट् । दिधेष्टीति** ॥ श्लौ द्वित्वादौ लघूपधगुणे तकारस्य ष्टुत्वमिति भावः । दिधिषति । दिधेक्षि । दिधिष्टः । दिधेष्मि । दिधिष्वः । दिधेष । दिधिषतुः । दिधेषिथ । दिधिषिव । धेषिता । धेषिष्यति । दिधेष्टु–दिधिष्टात् । दिधिषतु । दिधिड्ढि । दिधेषाणि । अदिधेट् । अदिधिष्टाम् । अदिधिषुः । अदिधेषम् । अदिधिष्व । दिधिष्यात् । अधैषीत् । अधेषिष्यत् । **धन धान्ये इति** ॥ धान्यार्जने इत्यर्थः । **दधन्तीति** ॥ क्षमूष् सहने इति धातोः चक्षंसे इतिवदनुनासिकस्य क्वीति न दीर्घः । दधसि । दधन्थ । दधन्मि । दधन्वः । दधन्मः । दधान । दधनतुः । दधनिथ । दधनिव । धनिता । धनिष्यति । दधन्तु–दधन्तात् । दधन्ताम् । दधनतु । दधन्हि । दधनानि । अदधन् । अदधन्ताम् । अदधनुः । अदधन् । अदधन्तम् । अदधन्त । अदधनम् । अदधन्व । अदधन्म । दधन्यात् । धन्यात् । अधानीत्–अधनीत् । अधनिष्यत् । **जन जनने इति** ॥ उत्पत्तौ अकर्मकः । उत्पादने सकर्मकः । **जनसन** ॥ 'विड्वनोः' इत्यत. आदित्यनुवर्तते । तदाह । **एषामाकारोऽन्तादेशः इति** ॥ सन् झल् इत्यनयोः द्वन्द्वात् सप्तमीद्विवचनम् । सनि झलि चेति लभ्यते । 'अनुदात्तोपदेशे' इत्यतः झलि क्ङितीत्यनुवर्तते । तत्र झलीत्यनुवृत्तेन सन् विशेष्यते । तदादिविधिः । झलादौ सनीति लभ्यते । क्ङितीत्यनुवृत्तं तु एतत्सूत्रस्थेन झला विशेष्यते । तदादिविधिः । झलादौ क्ङितीति लभ्यते । तथाच झलादौ सनीति झलादौ क्ङितीति च परनिमित्तद्वयं लब्धम् । तदाह ।

एषामाकारोऽन्तादेशः स्याज्झलादौ सनि झलादौ क्ङिति च। जजातः। जज्ञति। जजंसि। जजान। जजायात्–जजन्यात्। जायात्–जन्यात्। गा ११०६ स्तुतौ। देवाञ्जिगाति सुम्नयुः। जिगीतः। जिगति।

इति तिङन्तजुहोत्यादिप्रकरणम्।

---

**झलादौ सनि झलादौ क्ङिति चेति** ॥ सन्विशेषणञ्झलादाविति किम्। जिजनिषति। सिसनिषति। चिकनिषति। अथ क्ङितोर्झल्विशेषणस्य प्रयोजनमाह। **जज्ञतीति** ॥ जजन् अति इति स्थिते अतेर्ङित्त्वे झलादित्वाभावादात्त्वाभावे 'गमहन' इत्युपधालोपे नकारस्य श्चुत्वेन ञकार इति भावः। 'जनसनखना सन्' इत्याश्रित्य योगविभागेन उक्तार्थसिद्धिश्चाश्रित्य झल्ग्रहणन्त्वत्र सूत्रे प्रत्याख्यातम् भाष्ये। **जजंसीति** ॥ 'नश्च' इत्यनुस्वारः। जजाथ. । जजाथ। जजन्मि। जजन्वः। जजन्मः। **जजानेति** ॥ जज्ञतुः। सेडयम्। जजनिथ। जज्ञथुः। जज्ञिव। जनिता। जनिष्यति। जजन्तु–जजातात्। जजाहि। जजनानि। अजजन्। अजजाताम्। अजज्ञु.। अजजनम्। अजजन्व। विधिलिङि 'ये विभाषा' इति मत्वा आह। **जजायात्–जजन्यात् इति** ॥ अजनीत्–अजानीत्। अजनिष्यत्। **गा स्तुतौ। देवाञ्जिगातीति** ॥ 'भृञामित्' इत्यत्र 'बहुळञ्छन्दसि' इति वचनादभ्यासस्य इत्त्वमिति भावः। **जिगीतः इति** ॥ 'ई हल्यघोः' इति ईत्त्वम्। **जिगतीति** ॥ अभ्यस्तत्वाददादेशे 'श्नाभ्यस्तयोः' इत्याल्लोपः। जिगासि। जिगीथः। जिगीथ। जिगामि। जिगीवः। जगौ। जगतुः। जगिथ-जगाथ। जगिव। गाता। गास्यति। जिगातु–जिगीतात्। जिगीताम्। जिगतु। जिगीहि। जिगानि। अजिगात्। अजिगीताम्। अजिगुः। अजिगाः। अजिगाम्। अजिगीव। जिगीयात्। आशिषि गायात्। अगासीत्। अगास्यत्।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां श्लुविकरण समाप्तम्।

। श्रीरस्तु ।

# ॥ अथ तिङन्तदिवादिप्रकरणम् ॥

दिवु ११०७ क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु । झॄषन्ताः परस्मैपदिनः ।

## २५०५ । दिवादिभ्यः श्यन् । (३-१-६९)

शपोऽपवादः 'हलि च' (सू ३५४) इति दीर्घः । दीव्यति । दिदेव । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दीव्यात् । अदेवीत् । अदेविष्यत् । षिवु ११०८ तन्तुसन्ताने । परिषीव्यति । परिषिषेव । न्यषेवीत्–न्यसेवीत् । स्त्रिवु ११०९ गतिशोषणयोः । ष्ठिवु १११० निरसने । केचिदिहेमं न पठन्ति । ष्णुसु ११११ अदने । 'आदाने' इत्येके । 'अदर्शने' इत्यपरे । सुष्णोस । ष्णसु १११२ निरसने । स्नस्यति । सस्नास । क्नसु १११३ ह्वरणदीप्त्योः । ह्वरणं कौटिल्यम् । चक्नास । व्युष १११४ दाहे । वुव्योष । प्लुष १११५ च । नृती १११६ गात्रविक्षेपे । नृत्यति । ननर्त ।

अथ श्यन्विकरणधातवो निरूप्यन्ते । **दिवु क्रीडेति** ॥ उदिदयम् । तेन क्त्वायामिड्विकल्पः। निष्ठायाञ्च सेट्। **झॄषन्ताः इति** ॥ जॄष् झॄष् वयोहानौ इत्येतत्पर्यन्ता इत्यर्थः । **दिवादिभ्यः श्यन्** ॥ 'कर्तरि शप्' इत्यतः कर्तरीति 'सार्वधातुके यक्' इत्यतः सार्वधातुके इति चानुवर्तते इत्यभिप्रेत्य आह । **शपोऽपवादः इति** ॥ शकारनकारावितौ । दिव् य ति इति स्थिते आह । **हलि चेति दीर्घः इति** ॥ श्यनः अपित्त्वेन ङित्त्वान्न गुण इति भावः । दीव्यतः। दीव्यन्ति। इत्यादि सुगमम्। **दिदेवेति** ॥ दिदिवतु । दिदेविथ । दिदिविव । सेट्त्व सूचयति । **देवितेति** ॥ षिवु धातुरपि सेट् षोपदेशः दिवुधातुवत् । **परिषीव्यतीति** ॥ 'परिनिविभ्यस्सेव' इति षत्वमिति भावः । **परिषिषेवेति** ॥ स्थादिष्वेवाभ्यासस्य इति नियमस्तु न। तत्र प्राक्सितादित्यनुवृत्तेरिति भावः । 'सिवादीनां वाड्व्यवायेऽपि' इति मत्वा आह । **न्यषेवीत्–न्यसेवीदिति** ॥ स्त्रिवु धातुस्तु रेफवान । **ष्ठिवु निरसने इति** ॥ 'सुब्धातुष्ठिवुष्वष्कतीनाम्' इति न सत्वम् । ष्ठीव्यति इत्यादि सुगमम । आर्धधातुकेषु तु शब्विकरणस्थष्ठिवुधातुवद्रूपाणि । ष्णसु धातुश्च षोपदेशः । **नृती गात्रेति** ॥ 'श्वादिनः'

## २५०६ । सेऽसिचि कृतचृतच्छृदतृदनृतः । (७-२-५७)

एभ्यः परस्य सिज्भिन्नस्य सादेरार्धधातुकस्य इड्वा स्यात् । नर्तिष्यति—नर्त्स्यति । नृत्येत् । नृत्यात् । अनर्तीत् । त्रसी १११७ उद्वेगे । 'वा भ्राश—' (सू २३२१) इति श्यन्वा । त्रस्यति—त्रसति । त्रेसतुः—तत्रसतुः । कुथ १११८ पूतीभावे । पूतीभावो दौर्गन्ध्यम् । पुथ १११९ हिंसायाम् । गुध ११२० परिवेष्टने । क्षिप ११२१ प्रेरणे । क्षिप्यति । क्षेप्ता । पुष्प ११२२ विकसने । पुष्प्यति । पुपुष्प । तिम ११२३ ष्टिम ११२४ ष्टीम ११२५ आर्द्रीभावे । तिम्यति । स्तिम्यति । स्तीम्यति । व्रीड ११२६ चोदने लज्जायां च । व्रीड्यति । इष ११२७ गतौ । इष्यति । षह ११२८ षुह ११२९ चक्यर्थे । चक्यर्थस्तृप्तिः । सह्यति । सुह्यति । जॄष् ११३० झॄष् ११३१ वयोहानौ । जीर्यति । जजरतुः—जेरतुः । जरिता—जरीता । जीर्येत् । जीर्यात् । 'जॄस्तम्भु—' (सू २२९१) इत्यङ्वा । 'ऋदृशोऽङि गुणः' (सू २४०६) । अजरत्—अजारीत् । अजारिष्टाम् । झीर्यति । जझरतुः । अझारीत् । षूङ् ११३२ प्राणिप्रसवे । सूयते । सुषुवे । 'स्वरतिसूति—' (सू २२७९) इति विकल्पं बाधित्वा 'श्र्युकः किति' (सू २३८१) इति निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । सुषुविषे । सुषुविवहे । सोता—सविता ।

---

इत्याद्यर्थमीत्त्वम् । सेडयम् । **सेऽसिचि** ॥ से असिचि इति छेदः । सप्तमी षष्ठ्यर्थे । कृत चृत छृद तृद नृत् एषां समाहारद्वन्द्वात् पञ्चमी । 'उदितो वा' इत्यतो वेति आर्धधातुकस्येडिति चानुवर्तते । तदाह । **एभ्यः इत्यादिना** ॥ नित्यमिटि प्राप्ते विकल्पार्थमिदं वचनम् । **अनर्तीदिति** ॥ 'सेऽसिचि' इत्यत्र असिचि इत्युक्तेर्नित्यमिडिति भाव. । **त्रसी उद्वेगे** ॥ 'वा जॄभ्रमुत्रसाम्' इत्येत्त्वाभ्यासविकल्पौ मत्वा आह । **त्रेसतुः—तत्रसतुरिति । कुथ पूतीभावे इति** ॥ पवित्रीभवने इत्यर्थः । दुर्गन्धकरणे इति वा । (पूतिगन्धस्तु दुर्गन्धः) इत्यमरः । **तिम ष्टिम ष्टीमेति** ॥ द्वितीयतृतीयौ षोपदेशौ । द्वितीय इदुपधः । तृतीयस्तु ईदुपधः । षहषुहेति षोपदेशौ । **चक्यर्थस्तृप्तिरिति** ॥ यद्यपि 'चक तृप्तौ प्रतिघाते च' इत्युक्तम् । तथापि तृप्तिरेवेह विवक्षिता व्याख्यानात् । षुहेः 'नपुंसके भावे क्तः' इति क्तप्रत्यये सुहितशब्दः । सुहितस्तृप्तिरिति 'पूरणगुण' इति सूत्रे कैयटः । जॄष् झॄष् वयोहानाविति सेटकौ । **जीर्यतीति** ॥ 'ॠत इद्धातोः' इति इत्त्वे 'हलि च' इति दीर्घ इति भावः । अतुसादौ 'ऋच्छत्यॄताम्' इति गुणे रपरत्वे 'वा जॄभ्रमुत्रसाम्' इत्येत्त्वाभ्यासलोपविकल्प इति भावः । जजरिथ । 'वॄतो वा' इति मत्वा आह । **जरिता—जरीतेति** ॥ **षूङ् प्राणिप्रसवे इति** ॥ प्रसवः उत्पादन षोपदेशोऽयम् । **विकल्पमिति** ॥ परमपीति शेषः । **निषेधे प्राप्ते इति** ॥ पुरस्तात्प्रति-

दूङ् ११३३ परितापे । दूयते । दीङ् ११३४ क्षये । दीयते ।

## २५०७ । दीङो युडचि क्ङिति । (६-४-६३)

दीङः परस्याजादेः क्ङित आर्धधातुकस्य युट् स्यात् । 'वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ' (वा ४०६२) दिदीये ।

## २५०८ । मीनातिमिनोतिदीङां ल्यपि च । (६-१-५०)

एषामात्त्वं स्याल्ल्यपि चकारादशित्येज्निमित्ते । दाता । दास्यते । अदास्त । अदास्थाः । डीङ् ११३५ विहायसा गतौ । डीयते । धीङ् ११३६ आधारे । धीयते । दिध्ये । धेता । मीङ् ११३७ हिंसायाम् । हिंसा अत्र प्राणवियोगः । मीयते । रीङ् ११३८ श्रवणे । रीयते । लीङ् ११३९ श्लेषणे ।

## २५०९ । विभाषा लीयतेः । (६-१-५१)

लीयतेरिति यका निर्देशो न तु श्यना । लीलीङोरात्त्वं वा स्यादेज्विषये ल्यपि च । लेता—लाता । लेष्यते—लास्यते । 'एज्विषये' किम् । लीयते ।

षष्ठकाण्डारम्भसामर्थ्यादिति भावः । **दूङ् परितापे इति** ॥ पीडने पीडितीभवने वेत्यर्थः। आद्ये सकर्मकः । द्वितीये अकर्मकः। **दीङ् क्षये इति** ॥ क्षयो ह्रस्वः नाशो वा । **दीङो युडचि** ॥ 'आर्धधातुके' इत्यधिकृतम् अचा विशेष्यते । तदादिविधिः । दीङ इति पञ्चमी । सप्तमी षष्ठ्यर्थे । तदाह । **दीङः परस्येत्यादिना** ॥ दिदी ए इति स्थिते परत्वात् 'एरनेकाचः' इति यणि प्राप्ते नित्यत्वात् युट् । टकार इत् । उकार उच्चारणार्थः । टित्त्वादाद्यवयवः। दिदीये इति रूपमिति भाव. । ननु युटि कृतेऽपि तस्यासिद्धत्वाद्यण् दुर्वारः। तथाच दिद्य्ये इति स्यात्। इकारो न श्रूयेत यकारद्वय श्रूयेत । इत्यत आह । **वुग्युटाविति** ॥ **मीनातिमिनोति** ॥ 'आदेच उपदेशेऽशिति' इत्यत. आदित्यनुवर्तते । तदाह । **एषामात्त्वं स्यात् ल्यपीति** ॥ चकारात् एचः अशितीति परनिमित्तं समुच्चीयते । तत्र एच इत्यनन्तर निमित्ते इति शेष । एज्निमित्ते अशिति प्रत्यये च परे इति फलितम् । तदाह । **चकारादशित्येज्निमित्ते इति** ॥ समुच्चीयत इति शेष. । लुङ्याह । **अदास्तेति** ॥ इह आत्त्वे कृते ङित्त्वे सत्यपि 'स्थाघ्वोरिच्च' इति न भवति । स्थाघ्वोरित्त्वे 'दीङः प्रतिषेधः' इति घुसंज्ञासूत्रस्थभाष्यपठितवार्तिकादिति भावः । **धीङ् आधारे इति** ॥ आधारः आधारणम् । स्थापनमिति यावत् । **लीङ् श्लेषणे इति** ॥ लीयते । लिल्ये । लिल्यिषे। **विभाषा लीयतेः** ॥ ननु लीयतेरिति श्यना निर्देशात् 'लीङ् श्लेषणे' इति श्नाविकरणस्य ग्रहण न स्यादित्यत आह । **यका निर्देशः इति** ॥ 'सार्वधातुके यक्' इति विहितयका लीयतेरिति निर्देशः सच श्यन्श्नान्तसाधारणः । यक उभयत्रापि साधारण्यादिति भावः । 'मीनातिमिनोति' इत्यतः ल्यपीति 'आदेच.' इत्यतः आदिति एच इति च । तदाह । **लीलीङोरित्यादिना** ।

लिल्ये। व्रीङ् ११४० वृणोत्यर्थे। व्रीयते। विव्रिये। 'स्वादय ओदितः (ग सू २९६)। तत्फलं तु निष्ठानत्वम्। पीङ् ११४१ पाने। पीयते। माङ् ११४२ माने। मायते। ममे। ईङ् ११४३ गतौ। ईयते। अयां चक्रे। प्रीङ् ११४४ प्रीतौ। सकर्मकः। प्रीयते। पिप्रिये।

अथ चत्वारः परस्मैपदिनः। शो ११४५ तनूकरणे।

## २५१०। ओतः श्यनि। (७-३-७१)

लोपः स्याच्छ्यनि। श्यति। श्यतः। श्यन्ति। शशौ। शशतुः। शाता। शास्यति। 'विभाषा घ्राधेट्—' (सू २३७६) इति सिचो वा लुक्। लुगभावे 'यमरम—' (सू २३७७) इतीट्सकौ। अशात्। अशाताम्। अशुः। अशासीत्। अशासिष्टाम्। छो ११४६ छेदने। छ्यति। षो ११४७ अन्तकर्मणि। स्यति। ससौ। अभिष्यति। अभ्यष्यन्। अभिससौ। दो ११४८ अवखण्डने। द्यति। ददौ। प्रणिदाता। देयात्। अदात्।

अथात्मनेपदिनः पञ्चदश। जनी ११४९ प्रादुर्भावे।

---

**स्वादय ओदितः इति**॥ धातुपाठपठितङ्गणसूत्रमिदम्। 'षूङ् प्राणिप्रसवे' इत्यारभ्य व्रीडन्ता ओदित्कार्यभाज इत्यर्थः। **निष्ठानत्वमिति**॥ 'ओदितश्च' इत्यनेनेति भाव। **प्रीङ् प्रीताविति**॥ प्रीतिस्तुष्टिः। (मुत्प्रीति' प्रमदो हर्षः) इत्यमर। एव सत्यकर्मकः। यथा फलमूलादिना हरिः प्रीयते। हृष्यतीत्यर्थः। यदा तु प्रीति तर्पणं 'प्रीञ् तर्पणे' इति क्रैयादिकात् क्तिनि प्रीतिशब्दनिष्पत्ति तदा तु सकर्मक। तदाह। **सकर्मकः इति। प्रीयते इति**॥ तर्पयतीत्यर्थ.। **अथ चत्वारः परस्मैपदिनः इति**॥ 'दो अवखण्डने' इत्यन्ता इति भावः। शो तनूकरणे। अनिट्। **ओतः श्यनि**॥ 'घोर्लोपो लेटि वा' इत्यतो लोप इत्यनुवर्तते इत्यभिप्रेत्य शेष पूरयति। **लोपः स्यादिति। शशाविति**॥ 'आदेच' इत्यात्त्वे णलिति भावः। **शशतुरिति**॥ शशिथ–शशाथ। शशिव। **शास्यतीति**॥ श्यतु। अश्यत्। श्येत्। शायात्। लुङि सिचि विशेषमाह। **विभाषा घ्रेति**॥ सिचो लुक्पक्षे आह। **अशादिति**॥ 'आत' इति जुसिति मत्वा आह। **अशुरिति**॥ सिचो लुगभावे सगिटौ मत्वा आह। **अशासीदिति**॥ छोधातुरपि शोधातुवत्। **षो अन्तकर्मणीति**॥ समापने विनाशने वेत्यर्थ। शोधातुवद्रूपाणि। षोपदेशोऽयम्। **स्यतीति**॥ 'ओतः श्यनि' इति लोपः। **अभिष्यतीति। अभ्यष्यदिति**॥ 'प्राक्सितात्' इति षत्वम्। **अभिससाविति**॥ स्थादिष्विति नियमात् न ष.। दो अवखण्डने। **प्रणिदातेति**॥ 'नेर्गद' इति णत्वम्। **देयादिति**॥ आशीर्लिङि एर्लिङीत्येत्त्वम्। **अदादिति**॥ 'गातिस्था' इति सिचो लुक्। **अथात्मनेपदिनः इति**॥ वाश्र शब्दे इत्यन्ता इत्यर्थः। **जनी प्रादुर्भावे इति**॥ श्वीदितो निष्ठा-

## २५११ । ज्ञाजनोर्जा । (७-३-७९)

अनयोर्जादेशः स्याच्छिति । जायते । जज्ञे । जज्ञाते । जज्ञिरे । जनिता । जनिष्यते । 'दीपजन—' (२३२८) इति वा चिण् ।

## २५१२ । जनीवध्योश्च । (७-३-३५)

अनयोरुपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च । अजनि—अजनिष्ट । दीपी ११५० दीप्तौ । दीप्यते । दिदीपे । अदीपि—अदीपिष्ट । पूरी ११५१ आप्यायने । पूर्यते । अपूरि—अपूरिष्ट । तूरी ११५२ गतित्वरणहिंसनयोः । तूर्यते । तुतूरे । धूरी ११५३ गूरी ११५४ हिंसागत्योः । धूर्यते । दुधूरे । गूर्यते । जुगूरे । घूरी ११५५ जूरी ११५६ हिंसावयोहान्योः । शूरी ११५७ हिंसास्तम्भनयोः । चूरी ११५८ दाहे । तप ११५९ ऐश्वर्ये वा । अयं धातुरैश्वर्ये वा श्यनन्तङ्च्च लभते । अन्यदा तु शब्विकरणः परस्मैपदीत्यर्थः । केचित्तु वाग्रहणं वृतुधातोराद्यवयवमिच्छन्ति । तप्यते । तप्ता । तप्स्यते । 'पत' इति व्यत्यासेन पाठान्तरम् । 'द्युत द्यामानि युतः पत्यमानः' ।

याम्' इत्याद्यर्थमीदित्त्वम् । **ज्ञाजनोर्जा ॥ शितीति** ॥ ष्ठिवुक्लम्वाचमामित्यतस्तदनुवृत्तेरिनि भावः । **जायते इति** ॥ ज्ञाधातोस्तु श्नाविकरणत्वात् जानातीत्युदाहरणम् । उभयत्रापि जादेशस्य ह्रस्वान्तत्वे 'अङ्गकार्ये कृते पुनर्नाङ्गकार्यम्' इति परिभाषया 'अतो दीर्घो यञि' इत्यप्राप्तौ जादेशस्य दीर्घान्तत्वमाश्रितम् । **जज्ञे इति** ॥ 'गमहन' इत्युपधालोपे नस्य श्चुत्वेन ञः । जायेत । जनिषीष्ट । लुङि अजन् स् त इति स्थिते आह । **दीपेति । वा चिणिति** ॥ सिच इति शेषः । अजन् इ त इति स्थिते उपधावृद्धौ प्राप्तायाम् । **जनीवध्योश्च** ॥ 'अत उपधाया' इत्यत उपधाया इति 'मृजेर्वृद्धिः' इत्यतो वृद्धिरिति 'नोदात्तोपदेशस्य' इत्यतो नेति 'आतो युक्' इत्यतः चिण्कृतोरिति 'अचोञ्णिति' इत्यतः ञ्णितीति चानुवर्तते । तदाह । **अनयोरिति** ॥ दीपिधातुरीदित् । 'दीपजन' इति सिचः चिण्विकल्पं मत्वा आह । **अदीपि—अदीपिष्टेति** ॥ पूरीधातुरपि ईदित् । 'दीपजन' इति चिण्विकल्पं मत्वा आह । **अपूरि—अपूरिष्टेति** ॥ तूरी इत्यादयोऽपि 'चूरी दाहे' इत्यन्ता ईदित एव । **तप ऐश्वर्येवेति** ॥ श्यन् आत्मनेपदञ्चेति शेषः । उभयोः प्रकृतत्वादित्यभिप्रेत्य शेषं पूरयति । **श्यनं तङ्श्चेति** ॥ **अन्यदा त्विति** ॥ ऐश्वर्यादन्यत्रार्थे वृत्तिदशायामित्यर्थः । **केचित्त्विति** ॥ 'तप ऐश्वर्ये वा' 'वृतु वरणे' इति धातुपाठे स्थितम् । तत्र 'वावृतु वरणे' इत्येव वाशब्दं वृतु इत्यस्य आद्यवयवमिच्छन्तीत्यर्थः । एवञ्च तप ऐश्वर्ये इत्येव स्थितम् । अस्मिन्पक्षे तपधातोः नित्यमेव श्यन् तङ् चेति भावः । **तप्यते इति** ॥ ईष्टे इत्यर्थः । प्रथमपक्षे ऐश्वर्ये तपतीत्यपि भवति ॥ **पत इतीति** ॥ तपधातोस्तकारपकारयोः क्रमव्यत्यासेन 'पत ऐश्वर्ये वा' इति पाठान्तरमित्यर्थः । एव व्यत्यासेन पाठे

वृतु ११६० वरणे । वृत्यते । पक्षान्तरे । वावृत्यते । 'ततो वावृत्यमाना सा रामशालां न्यविक्षत ।' इति भट्टिः । क्लिश ११६१ उपतापे । क्लिश्यते । क्लेशिता । काशृ ११६२ दीप्तौ । काश्यते । वाशृ ११६३ शब्दे । वाश्यते । ववाशे ।

अथ पञ्च स्वरितेतः । मृष ११६४ तितिक्षायाम् । मृष्यति–मृष्यते । ममर्ष–ममृषे । शुचिर् ११६५ पूतीभावे । पूतीभावः क्लेदः । शुच्यति–शुच्यते । शुशोच–शुशुचे । अशुचत्–अशोचीत्–अशोचिष्ट । णह ११६६ बन्धने । नह्यति–नह्यते । ननाह । नेहिथ–ननद्ध । नेहे । नद्धा । नत्स्यति । अनात्सीत् । रञ्ज ११६७ रागे । रज्यति–रज्यते । शप ११६९ आक्रोशे । शप्यति–शप्यते ।

अथैकादशानुदात्तेतः । पद ११७० गतौ । पद्यते । पेदे । पत्ता । पद्येत । पत्सीष्ट ।

## २५१३ । चिण् ते पदः । (३-१-६०)

पदश्च्लेश्चिण्स्यात्तशब्दे परे । प्रण्यपादि । अपत्साताम् । अपत्सत । खिद ११७१ दैन्ये । खिद्यते । चिखिदे । खेत्ता । अखित्त । विद ११७२

---

प्रयोग दर्शयति । **द्युत द्यामानि युतः पत्यमानः इति** ॥ "प्रवायुमच्छा बृहतीत्यृचः" एकदेशोऽयम् । पत्यमान इत्यस्य ईशान इत्यर्थः । अत्र लटश्शानच् आत्मनेपद श्यन् च । **पक्षान्तरे इति** ॥ वावृतु इति पाठपक्षे इत्यर्थः । **वावृत्यते इति** ॥ वृणोतीत्यर्थः । अपेक्षते इति यावत् । वावृतुधातोः प्रयोग दर्शयति । **ततो वावृत्यमानेति** ॥ अपेक्षमाणेत्यर्थः । **न्यविक्षतेति** ॥ 'नेर्विशः' इत्यात्मनेपदम् । 'शल इगुपधात्' इति क्सः । **अथ पञ्च स्वरितेतः इति** ॥ 'शप आक्रोशे' इत्यन्ता इत्यर्थः । **शुच्यतीति** ॥ क्लिन्नम्भवतीत्यर्थः । **अशुचदिति** ॥ इरित्त्वादङिति भावः । **णह बन्धने इति** ॥ णोपदेशोऽयम् । अनिट् । **ननाहेति** ॥ नेहतुः । भारद्वाजनियमात्थलि वेट् इति मत्वा आह । **नेहिथ–ननद्धेति** ॥ इट्पक्षे 'थलि च सेटि' इत्येत्त्वाभ्यासलोपौ । इडभावे तु 'नहो धः' इति हस्य ध इति भावः । 'रञ्ज रागे' अनिट् । **रज्यतीति** ॥ 'अनिदिताम्' इति नलोप इति भावः । ररञ्ज । रेजतुः । नलोपे एत्त्वाभ्यासलोपौ । ररञ्जिथ–ररङ्क्थ । रेजिव । रङ्क्ता इत्यादि । **अथैकादशेति** ॥ 'लिश अल्पीभावे' इत्यन्ता इत्यर्थ । 'पद गतौ' अनिट् । **चिण् ते पदः । पदश्च्लेरिति** ॥ 'च्लेस्सिच्' इत्यत च्लेरित्यनुवर्तते इति भावः । **तशब्दे इति** ॥ आत्मनेपदप्रथमैकवचने इत्यर्थः।इदञ्च भाष्ये स्पष्टम् । **प्रण्यपादीति**॥ सिचश्चिणि उपधावृद्धौ 'चिणो

सत्तायाम् । विद्यते । वेत्ता । बुध ११७३ अवगमने । बुध्यते । बुबुधे । बोद्धा । भोत्स्यते । भुत्सीष्ट । अबोधि–अबुद्ध । अभुत्साताम् । युध ११७४ सम्प्रहारे । युध्यते । युयुधे । योद्धा । अयुद्ध । कथं 'युध्यति' इति युधमिच्छतीति क्यच् । 'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्' (प ९७) इति वा । अनो रुध ११७५ कामे । अनुरुध्यते । अण ११७६ प्राणने । अण्यते । आणे । अणिता । 'अन' इति दन्त्यान्तोऽयमित्येके । मन ११७७ ज्ञाने । मन्यते । मेने । मन्ता । युज ११७८ समाधौ । समाधिश्चित्तवृत्तिनिरोधः । अकर्मकः । युज्यते । योक्ता । सृज ११७९ विसर्गे । अकर्मकः । संसृज्यते सरसिजैररुणांशुभिन्नैः । ससृजिषे । स्रष्टा । स्रक्ष्यते । 'लिङ्सिचौ—' (सू २३००) इति कित्त्वान्न गुणो नाप्यम् । सृक्षीष्ट । असृष्ट ।

---

लुक्' इति तशब्दस्य लोपः। 'नेर्गद' इति णत्वमिति भाव॰ । 'विद सत्तायाम्' **वेत्तेति** ॥ अनिडिति भाव. । लिटि क्रादिनियमादिट् । एव बुधधातुरपि । बोद्धेति ॥ तासि 'झषस्तथोः' इति तकारस्य धकारः । **भोत्स्यते इति** ॥ 'एकाच.' इति भष् । **भुत्सीष्टेति** ॥ 'लिङ्सिचौ' इति कित्त्वम् । 'दीपजन' इति चिण्विकल्प मत्वा आह । **अबोधि–अबुद्धेति । कथं युध्यतीति** ॥ आत्मनेपदित्वादिति भाव॰ । समाधत्ते । **युधमिति** ॥ युधूशब्दः भावक्विबन्तः । युधमिच्छतीत्यर्थे 'सुप आत्मनः' इति क्यजन्तात् परस्मैपदमित्यर्थः । अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यमिति समाधानं त्वनुचितम् । तस्य भाष्यादृष्टत्वेन अप्रामाणिकत्वात् । अत एव 'व्यत्ययो बहुळम्' इति सूत्रभाष्ये प्रतीपमन्य ऊर्मिर्युध्यतीत्यत्र व्यत्ययेन परस्मैपदमित्येव समाहितम् । **अनो रुध कामे इति** ॥ अनु इत्युपसर्गात्पर. रुधधातुः कामे वर्तते इत्यर्थः । युज समाधौ । अनिट् । **अकर्मकः इति** ॥ चित्तवृत्तेर्धात्वर्थान्तर्भावादिति भावः । अर्थान्तरे तु सकर्मकोऽपि भवति । सृजियुज्योः सकर्मकयोः कर्मवद्भाव इति कर्मवत्सूत्रवार्तिकात् । एतच्च कर्मकर्तृप्रक्रियाया स्पष्टीभविष्यति । **सृज विसर्गे इति** ॥ अनिट् । विसर्गस्सम्बन्धः । उपसर्गवशात् । तदाह । **अकर्मकः इति । संसृज्यते इति** ॥ अरुणांशुभिन्नैः अरुणकिरणविकसितै. सरसिजैः कमलै. संसृज्यते सम्बध्नातीत्यर्थः । कमलिनीति शेषः । कर्तरि लकारोऽयम्, न त्वयङ्कर्मणि लकार., अकर्मकत्वात् । अर्थान्तरे तु सकर्मकोऽयमिति कर्मकर्तृप्रक्रियायां वक्ष्यते । लिट्याह । **ससृजिषे इति** ॥ क्रादिनियमादिडिति भावः । **स्रष्टेति** ॥ 'सृजिदृशोर्झल्यमकिति' इत्यमागमे ऋकारस्य यणि व्रश्चादिना जस्य षः । ष्टुत्वेन तकारस्य ट इति भावः । **स्रक्ष्यते इति** ॥ पूर्ववदमि जस्य षत्वे 'षढोः' इति षस्य कत्वे, सस्य षत्व-

अस्रृक्षाताम् । लिश ११८० अल्पीभावे । लिश्यते । लेष्टा । लेक्ष्यते । लिक्षीष्ट । अलिक्षत । अलिक्षाताम् ।

अथागणान्तात्परस्मैपदिनः । राधः ११८१ अकर्मकाद्वृद्धावेव । एवकारो भिन्नक्रमः । राधोऽकर्मकादेव श्यन् । उदाहरणमाह । वृद्धाविति । यन्मह्यमपराध्यति । द्रुह्यतीत्यर्थः । विराध्यन्तं क्षमेत कः । द्रुह्यन्तमित्यर्थः । राध्यत्योदनः । सिध्यतीत्यर्थः । कृष्णाय राध्यति । दैवं पर्यालोचयतीत्यर्थः । दैवस्य धात्वर्थेऽन्तर्भावाज्जीवत्यादिवदकर्मकत्वम् । रराध । रराधतुः । रराधिथ । 'राधो हिंसायाम्' (सू २५३२) इत्येत्त्वाभ्यासलोपाविह न ।

---

मिति भावः । आशीर्लिङि आह । **सृक्षीष्टेति** ॥ अत्र लघूपधगुणमाशङ्क्य आह । **लिङ्सिचाविति । नाप्यमिति** ॥ 'सृजिदृशोर्झल्यम्' इत्यमपि नास्तीत्यर्थः । अकित्येव तद्विधानादिति भावः । लुङयाह । **अस्रृष्टेति** ॥ 'झलो झलि' इति सिचो लोपः । 'लिङ्सिचावात्मनेपदेषु' इति सिचः कित्त्वान्न गुणः नाप्यमिति भावः । लिश अल्पीभावे । **लिक्षीष्टेति** ॥ 'लिङ्सिचौ' इति कित्त्वान्न गुणः । **अलिक्षतेति** ॥ 'शल इगुपधात्' इति क्सः । **आ गणान्तादिति** ॥ दिवादिगणसमाप्तिपर्यन्तमित्यर्थः । **राधोऽकर्मकाद्वृद्धावेवेति** ॥ श्यनिति शेषः । राधधातोरकर्मकाद्वृद्धावेवार्थे श्यनिति प्रतीयमानोऽर्थः । एवं सति अकर्मकादिति व्यर्थम् । राधेरर्थान्तरे च श्यन् न स्यात् । इष्यते हि अपराध्यतीत्यादौ द्रोहाद्यर्थेऽपि श्यन् । तत्राह । **एवकारो भिन्नक्रमः इति** ॥ यस्मिन् क्रमे वृद्धावित्यत ऊर्ध्वं एवकारः पठितः ततोऽन्यः क्रमो यस्य स भिन्नक्रम इत्यर्थः । वृद्धावित्यत ऊर्ध्वं पठित एवकारः अन्यत्र निवेशनीय इति यावत् । तदेव दर्शयति । **राधोऽकर्मकादेव श्यनिति** ॥ एवञ्चार्थान्तरेऽपि श्यन् सिद्ध्यति । शत्रु हिनस्तीत्यर्थे शत्रुमपराध्नोतीत्यत्र सकर्मकत्वात् न श्यनिति भावः । तर्हि वृद्धावित्यस्य किं प्रयोजनमित्याशङ्क्य अकर्मकक्रिया एवंविधेति प्रदर्शनार्थन्तत् नतु परिसङ्ख्यानार्थमित्याह । **उदाहरणमाह । वृद्धावितीति** ॥ एवञ्च वृद्धिग्रहणमकर्मकक्रियामात्रोपलक्षणमिति भावः । तथाविधार्थान्तराण्युदाहरति । **यन्मह्यमित्यादिना** ॥ 'क्रुधद्रुह' इति सम्प्रदानत्वम् । **कृष्णाय राध्यतीति** ॥ 'राधीक्ष्योर्यस्य विप्रश्नः' इति सम्प्रदानत्वम् । **दैवमिति** ॥ कृष्णस्य किमिदानीं शुभमशुभं वेति पृष्टो दैवज्ञः तस्य शुभाशुभसूचकादित्यादिग्रहस्थितिं ज्योतिश्शास्त्रतः परीक्षते इति यावत् । ननु पर्यालोचने दैवस्य कर्मत्वात्कथमिह अकर्मकतेत्यत आह । **दैवस्येति** ॥ ननु 'राधोऽकर्मकाद्वृद्धावेव' इत्यत्र वृद्धिग्रहणस्य उपलक्षणतया हिंसार्थकस्यापि राधेर्दैवादिकत्वात् रराधतुः इत्यादौ 'राधो हिंसायाम्' इति वक्ष्यमाणावेत्त्वाभ्यासलोपौ स्यातामित्यत आह । **राधः इति** ॥ **इह नेति** ॥ रराधतुः इत्यादौ राधेर्हिंसार्थकत्वे 'राधो हिंसायाम्' इति वक्ष्यमाणावेत्त्वाभ्यासलोपौ न स्त इत्यर्थः । कुत इत्यत

हिंसार्थस्य सकर्मकतया दैवादिकत्वायोगात् । राद्धा । रात्स्यति । अयं स्वादिश्चुरादिश्च । व्यध ११८२ ताडने । 'ग्रहिज्या—' (सू २४१२) इति सम्प्रसारणम् । विध्यति । विव्याध । विविधतुः । विव्यधिथ—विव्यद्ध । व्यद्धा । व्यत्स्यति । विध्येत् । विध्यात् । अव्यात्सीत् । पुष ११८३ पुष्टौ । पुष्यति । पुपोष । पुपोषिथ । पोष्टा । पोक्ष्यति । 'पुषादि—' (सू २३४३) इत्यङ् । अपुषत् । शुष ११८४ शोषणे । अशुषत् । तुष ११८५ प्रीतौ । दुष ११८६ वैकृत्ये । श्लिष ११८७ आलिङ्गने । श्लिष्यति । शिश्लेष । श्लेष्टा । श्लेक्ष्यति ।

२५१४ । श्लिषः—

अस्मात्परस्यानिटश्च्लेः क्सः स्यात् । पुषाद्यङोऽपवादो न तु चिणः । पुरस्तादपवादन्यायात् ।

आह । **हिंसार्थस्येति** ॥ नोन्मिषत्येवैषा शङ्का । राधेरकर्मकस्यैव दैवादिकत्ववचनात् । हिंसार्थकस्य च राधेः सकर्मकतया दैवादिकत्वाभावादुक्तशङ्काया अनुन्मेषादित्यर्थः । ननु राध्नोति, राधयति, इति कथमित्यत आह । **अयं स्वादिश्चुरादिश्चेति** ॥ रराधिथ । क्रादिनियमात् नित्यमिट् । दीर्घाकारवत्त्वेन 'उपदेशेऽत्वतः' इत्यस्याप्रवृत्तेः । अजन्तोऽकारवानित्यत्र च ह्रस्वाकारस्यैव विवक्षितत्वात् । राद्धा । अरात्सीत् । **व्यध ताडने इति** ॥ चतुर्थान्तोऽयम् । अनिट् । 'ग्रहिज्या' इति श्यनो ङित्त्वात् 'लिट्यभ्यासस्य' इति यकारस्य सम्प्रसारणे पूर्वरूपे विध्यतीति रूपमित्यर्थः । वकारस्य तु न सम्प्रसारणम् । 'न सम्प्रसारणे सम्प्रसारणम्' इति निषेधात् । **विव्याधेति** ॥ द्वित्वे कृते अभ्यासस्य 'लिट्यभ्यासस्य' इति सम्प्रसारणमिति भावः । **विविधतुरिति** ॥ परत्वात् 'ग्रहिज्या' इति सम्प्रसारणे कृते द्वित्वमिति भावः । भारद्वाजनियमात्थलि वेडित्यत आह । **विव्यधिथ-विव्यद्धेति** ॥ 'लिट्यभ्यासस्य' इति सम्प्रसारणम् । अनिट्पक्षे 'झषस्तथोः' इति धः । **अव्यात्सीदिति** ॥ हलन्तलक्षणा वृद्धिः । पुषपुष्टौ । अनिट् । **पुपोषिथेति** ॥ अजन्ताकारवत्वाभावात् क्रादिनियमान्नित्यमिट् । **अपुषदिति** ॥ पुषाद्यङ् । ङित्त्वान्न गुणः । शुषधातुरनिट् । **अशुषदिति** ॥ पुषाद्यङिति भावः । एवमग्रेऽपि । तुष् दुष् श्लिष् एते अनिटः । लुङि श्लिषः च्लेस्सिजादेशे प्राप्ते । **श्लिषः** ॥ च्लेरिति 'शल इगुपधात्' इत्यतः अनिटः क्स इति चानुवर्तते । तदाह । **अस्मात्परस्येत्यादिना** ॥ ननु 'शल इगुपधात्' इत्येव क्से सिद्धे किमर्थमिदमित्यत आह । **पुषाद्यङोऽपवादः इति** ॥ 'शल इगुपधात्' इति क्स बाधित्वा परत्वात् पुषाद्यङ् स्यात् तन्निवृत्तये पुनः क्सविधिरित्यर्थ. । ननु श्लिष इति क्सः यथा परमपि पुषाद्यङम्बाधते तथा 'चिण्भावकर्मणोः' इति चिणमपि परं बाधेत एवं सति 'उपाश्लेषि कन्या देवदत्तेन' इत्यत्र कर्मणि लुङि 'चिण्भावकर्मणोः' इति च्लेश्चिण् न स्यादित्यत आह । **नतु चिणः इति** ॥ 'श्लिषः' इति क्सविधिः 'चिण् भाव-

## —आलिङ्गने। (३-१-४६)

श्लिषश्च्लेरालिङ्गने एव क्सो नान्यत्र। योगविभागसामर्थ्यात् 'शल इगुपधात्—' (सू २३३६) इत्यस्याप्ययं नियमः 'अश्लिक्षत्कन्यां देवदत्तः'। 'आलिङ्गन एव' इति किम्। समाश्लिषज्जतुकाष्ठम्। आङ्। प्रत्यासक्ताविह श्लिषिः। कर्मण्यनालिङ्गने सिजेव न तु क्सः। एकवचने

---

कर्मणो.' इति चिण्विधेर्न बाधक इत्यर्थः। कुत इत्यत आह। **पुरस्तादिति**॥ 'शल इगुपधादनिट क्स' 'श्लिषः' 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु' 'चिण् भावकर्मणो.' इति सूत्रक्रम इति भाव। आलिङ्गने श्लिष इति पूर्वसूत्रे यदनुवृत्तन्तत्सर्वमिहानुवर्तते, श्लिष इति च। तथाच आलिङ्गने विद्यमानात् श्लिषेः परस्य च्लेः क्सः स्यादिति लभ्यते। 'श्लिषः' इति पूर्वसूत्रेणैव सिद्धे नियमार्थमिदम्। तदाह। **श्लिषश्च्लेरालिङ्गने एव क्सो नान्यत्रेति**॥ नन्वयन्नियम. "अनन्तरस्य" इति न्यायात् श्लिष इति सूत्रप्राप्तस्यैव स्यात्, नतु 'शल इगुपधात्' इत्यस्यापीत्यत आह। **शल इगुपधादित्यस्याप्ययं नियमः इति**॥ कुत इत्यत आह। **योगविभागसामर्थ्यादिति**॥ यदि श्लिष इति प्राप्त एव क्स एव आलिङ्गन एव इति नियम्येत तर्हि योगविभागो व्यर्थः स्यात्। 'श्लिष आलिङ्गने' इत्येकसूत्रत्वे सत्यपि अनालिङ्गने क्सो नेत्यस्यार्थस्य सिद्धत्वात्। अत· 'शल इगुपधात्' इति क्सोऽपि श्लिषेरालिङ्गने एव न त्वनालिङ्गनेऽपि इति नियमो विज्ञायते इत्यर्थ·। **अश्लिक्षत् कन्यां देवदत्तः इति**॥ आलिङ्गदित्यर्थ.। अत्र पुषाद्यङम्बाधित्वा अनेन क्स.। **समाश्लिषज्जतुकाष्ठमिति**॥ जतु लाक्षा। साच काष्ठलग्नैवोत्पद्यते इति स्थितिः। जतु काष्ठञ्चेति समाहारद्वन्द्वः। (समाश्लिषज्जतुकाष्ठञ्च) इत्येव भाष्यम्। अत्र श्लिषेरालिङ्गनार्थकत्वाभावान्न क्सः। किन्तु पुषाद्यङेवेति भाव। नन्वजादित्वाभावेन आडागमस्यासम्भवात् समाश्लिषदित्ययुक्तमित्यत आह। **आङिति**॥ समाश्लिषत् इत्यत्र श्लिषे· प्राक् आङुपसर्ग एव, न त्वाडागम इति भ्रमितव्यमित्यर्थ·। नन्वालिङ्गन समाश्लेषण तथाच समाश्लिषज्जतुकाष्ठम् इत्यत्रापि श्लिषेरालिङ्गनार्थकत्वात् क्सो दुर्वार इत्यत आह। **प्रत्यासक्ताविहेति**॥ इह समाश्लिषज्जतुकाष्ठम् इत्यत्र। श्लिषिः प्रत्यासक्तौ संयोगे वर्तते नतु बाह्वादिना सवलनात्मकसम्बन्धविशेषरूपे आलिङ्गने इत्यर्थः। नन्वालिङ्गने एव श्लिषश्च्लेः क्सः न त्वनालिङ्गने इति नियमात् अनालिङ्गने 'शल इगुपधात्' इत्यपि क्सो न भवतीत्युक्तमयुक्तम्। समाश्लिषज्जतुकाष्ठमित्यत्रानालिङ्गने 'शल इगुपधात्' इति क्सम्बाधित्वा परत्वात् पुषाद्यङ एव प्राप्त्या क्सस्याप्रसक्तेरित्यत आह। **कर्मणीति**॥ अनालिङ्गनवृत्ते· श्लिषधातोः कर्मणि लुङि च्लेस्सिजेव भवति, न तु पुषाद्यङ्, तस्य परस्मैपदविषयत्वात्। कर्मणि लुङश्च 'भावकर्मणोः' इत्यात्मनेपदनियमात्। तस्य च सिच 'शल इगुपधात्' इति प्राप्त क्सः उक्तेन नियमेन अनालिङ्गनेऽपि वार्यते इति युक्तमित्यर्थः। यदुक्त आलिङ्गने श्लिषश्च्ले. क्स· पुषाद्यङ एवापवादः नतु चिणः इति। तस्य

च्चिण् । अश्लेषि । अश्लिक्षाताम् । अश्लिक्षत । अश्लिष्ठाः । अश्लिड्ढ्वम् । शक ११८८ विभाषितोऽमर्षणे । विभाषित इत्युभयपदीत्यर्थः । शक्यति–शक्यते वा हरिं द्रष्टुं भक्तः । शशाक । शेकिथ–शशक्थ । शेके । शक्ता । शक्ष्यति–शक्ष्यते । अशकत्–अशक्त । सेट्कोऽयमित्येके । तन्मतेनानिट्कारिकासु ऌदित्पठितः । शकिता । शकिष्यति । ष्विदा ११८९ गात्रप्रक्षरणे । घर्मस्रुतावित्यर्थः । अयं ञीदिति न्यासकारादयः । नेति हरदत्तादयः । स्विद्यति । सिष्वेद । सिष्वेदिथ । स्वेत्ता । अस्विदत् । क्रुध ११९० क्रोधे । क्रोद्धा । क्रोत्स्यति । क्षुध ११९१ बुभुक्षायां । क्षोद्धा । कथं क्षुधित इति । सम्पदादिक्विबन्तात्तारकादित्वादितजिति माधवः । वस्तुतस्तु 'वसतिक्षुधोः—'

प्रयोजनमाह । **एकवचने च्चिणिति** ॥ तदेवोदाहृत्य दर्शयति । **अश्लेषीति** ॥ आलिङ्गिता कन्या देवदत्तेनेत्यर्थः । श्लिषेरालिङ्गनार्थकात् कर्मणि लुङि प्रथमैकवचने तशब्दे परे 'च्चिण् भावकर्मणोः' इति च्लेश्चिणि कृते 'च्चिणो लुक्' इति तशब्दस्य लुक् । अत्र श्लिष इति क्सस्य पुषाद्यङ्मालापवादत्वाच्चिणपवादत्वाभावाच्चिण् निर्बाध इति भावः । 'समाश्लेषि जतुना काष्ठम्' इत्यत्र तु अनालिङ्गनात् च्लेश्चिणो निर्बाधत्वादश्लेषीति निर्बाधमेव । एवञ्च आलिङ्गने अनालिङ्गनेऽपि श्लिषः कर्मणि लुङि एकवचने तशब्दे परे च्लेश्चिणेवेति स्थितम् । अथानालिङ्गने श्लिषः कर्मणि लुङि 'शलः' इति क्सोऽपि नेति यदुक्तन्तदुदाहृत्य दर्शयति । **अश्लिक्षातामिति** ॥ अनालिङ्गने श्लिषः कर्मणि लुङः आतामि च्लेः क्साभावात् सिचि 'षढोः' इति षस्य कत्वे सस्य षत्वे रूपमिति भावः । नन्वश्लिक्षातामित्यत्र सत्यपि क्से 'क्सस्याचि' इत्यकारलोपे इष्टं सिद्धमित्यस्वरसात्कर्मणि लुङि झादावुदाहरति । **अश्लिक्षतेत्यादि** ॥ अश्लिष् स् झ इति स्थिते झोऽन्तादेशं बाधित्वा 'आत्मनेपदेष्वनतः' इत्यदादेशे षस्य कत्वे सिचस्सस्य षत्वे अश्लिक्षतेतीष्यते । च्लेः क्से तु सति अश्लिष् स् झ इति स्थिते 'क्सस्याचि' इत्यकारलोपाप्रसक्तेरतः परत्वात् 'आत्मनेपदेष्वनतः' इत्यदादेशो न स्यादिति भावः । **अश्लिष्ठाः इति** ॥ श्लिषेः कर्मणि लुङस्थासि च्लेस्सिचि 'झलो झलि' इत्यसम्भवादश्लिक्षथाः इति स्यादिति भावः । **अश्लिड्ढ्वमिति** ॥ श्लिषः कर्मणि लुङो ध्वमि सिचि 'झलो झलि' इति सस्य लोपे षस्य जश्त्वेन डकारे ष्टुत्वेन धस्य ढ । क्से तु सति अश्लिक्षध्वम् इति स्यादिति भावः । **शक विभाषितः इति** ॥ मर्षणे अर्थे शकधातुर्विकल्पित इत्यर्थः । विकल्पश्च प्रकृतपरस्मैपदविषयक एव, न तु दिवादिपाठविषयकः । व्याख्यानात् । तदाह । **उभयपदीति** ॥ मर्षणमिह सामर्थ्यम् । **शक्यति–शक्यते वा हरिं द्रष्टुं भक्तः इति** ॥ समर्थो भवतीत्यर्थः । **सेट्कोऽयमित्येके इति** ॥ स्वमते त्वनिट्क एवेति भावः । ननु अनिट्कारिकासु ऌदितश्शकेः पाठात् कथमनिट्कत्वमित्यत आह । **तन्मतेनेति** ॥ ये सेट्त्वं शकेर्वदन्ति तन्मतमवलम्ब्य अनिट्कारिकासु शकिः ऌदित्पठितः इत्यर्थः । **सम्पदादिक्विबन्तादिति** ॥ क्षुध्यत इति क्षुध् भावे क्विप् । क्षुध् अस्य सञ्जाता क्षुधित इति विग्रहः ।

(सू ३०४६) इतीट् वक्ष्यते । शुध ११९२ शौचे । शुध्यति । शुशोध । शोद्धा । षिधु ११९३ संराद्धौ । ऊदित्पाठः प्रामादिकः । सिध्यति । सेद्धा । सेत्स्यति । असिधत् । रध ११९४ हिंसासंराद्ध्योः । संराद्धिर्निष्पत्तिः । रध्यति । 'रधिजभोरचि' (सू २३०२) इति नुम् । ररन्ध । ररन्धतुः ।

## २५१५ । रधादिभ्यश्च । (७-२-४५)

'रध्' 'नश्' 'तृप्' 'दृप्' 'द्रुह्' 'मुह्' 'ष्णुह्' 'ष्णिह्' एभ्यो वलाद्यार्धधातुकस्य वेट् स्यात् । ररन्धिथ–ररद्ध । ररन्धिव–रेध्व ।

## २५१६ । नेट्यलिटि रधेः । (७-१-६२)

लिड्वर्जे इटि रधेर्नुम् न स्यात् । रधिता–रद्धा । रधिष्यति–रत्स्यति । अङि तु नुम् । 'अनिदिताम्—' (सू ४१५) इति नलोपः । अरधत् । णश ११९५ अदर्शने । नश्यति । ननाश । नेशतुः । नेशिथ ।

## २५१७ । मस्जिनशोर्झलि । (७-१-६०)

नुम् स्यात् । ननंष्ठ । नेशिव–नेश्व । नेशिम–नेश्म । नशिता–नंष्टा । नशिष्यति–नङ्क्ष्यति । नश्येत् । नश्यात् । अनशत् । प्रणश्यति ।

## २५१८ । नशेः षान्तस्य । (८-४-३६)

---

**वसतिक्षुधोः इति** ॥ वसेः क्षुधेश्च क्त्वानिष्ठयोरिडागमः स्यादिति तदर्थः । **वक्ष्यते इति** ॥ क्त्विति शेषः । **षिधु संराद्धाविति** ॥ निष्पत्तावित्यर्थः । **प्रामादिकः इति** ॥ माधवादिसम्मतत्वादिति भावः । **रध हिंसेति** ॥ सेट् । चतुर्थान्तोऽयम् । **ररन्धतुरिति** ॥ एत्त्वाभ्यासलोपौ बाधित्वा परत्वान्नुमि सयोगात्परत्वेन अकित्त्वान्नलोपो नेति भावः । **रधादिभ्यश्च** ॥ 'आर्धधातुकस्येड्वलादेः' इत्यनुवर्तते । 'स्वरतिसूति' इत्यतो वेति इत्यभिप्रेत्य शेषं पूरयति । **वलाद्यार्धधातुकस्य वेडिति** ॥ 'आर्धधातुकस्य' इति नित्ये प्राप्ते विकल्पोऽयम् । लुटि तासि इटि 'रधिजभोरचि' इति नुमि प्राप्ते । **नेट्यलिटि रधेः** ॥ 'इदितो नुम् धातोः' इत्यतो नुमित्यनुवर्तते । तदाह । **लिड्वर्जे इटीति** । **अङि त्विति** ॥ पुषाद्यङि कृते सतीत्यर्थः । **अरधदिति** ॥ "मो अहं द्विषतेऽरधम्" । **णश अदर्शने इति** ॥ णोपदेशोऽयं सेट् । 'रधादिभ्यश्च' इति वेट् । तत्र इट्पक्षे आह । **नेशिथेति** ॥ 'थलि च सेटि' इत्येत्त्वाभ्यासलोपाविति भावः । इडभावपक्षे ननश् थ इति स्थिते । **मस्जिनशोर्झलि** ॥ **नुम् स्यादिति** ॥ 'इदितो नुम्' इत्यतस्तदनुवृत्तेरिति भावः । **ननंष्ठेति** ॥ व्रश्चादिषत्वम् । ष्टुत्वम् । **प्रणश्यतीति** ॥ 'उपसर्गादसमासे' इति णत्वम् । **नशेः षान्तस्य** ॥ 'रषाभ्याम्' इत्यतो ण

णत्वं न स्यात्। प्रनंष्टा। अन्तग्रहणं भूतपूर्वप्रतिपत्त्यर्थम्। प्रनङ्क्ष्यति—नशिष्यति। तृप ११९६ प्रीणने। प्रीणनं तृप्तिस्तर्पणं च 'नाग्निस्तृप्यति काष्ठानाम्' 'पितॄनताप्सीत्' इति भट्टिः। इत्युभयत्र दर्शनात्। ततर्पिथ—ततर्प्थ—तत्रप्थ। तर्पिता—तर्प्ता—त्रप्ता। 'कृशमृशस्पृश—' इति सिज्वा। अतर्पीत्—अतार्प्सीत्—अत्राप्सीत्—अतृपत्। दृप ११९७ हर्षमोहनयोः। मोहनं गर्वः। दृप्यतीत्यादि।

'रधादित्वादिमौ वेट्कावमर्थमनुदात्तता'

द्रुह ११९८ जिघांसायाम्। 'वा द्रुहमुह' (सू ३२७) इति वा घः। पक्षे ढः। दुद्रोहिथ—दुद्रोग्ध—दुद्रोढ। द्रोहिता—द्रोग्धा—द्रोढा। द्रोहिष्यति—ध्रोक्ष्यति। ढत्वघत्वयोस्तुल्यं रूपम्। अद्रुहत्। मुह ११९९ वैचित्त्ये। वैचित्त्यमविवेकः। मुह्यति। मुमोहिथ—मुमोग्ध—मुमोढ। मोहिता—मोग्धा—मोढा। मोहिष्यति—मोक्ष्यति। अमुहत्। ष्णुह १२०० उद्गिरणे। स्नुह्यति। सुष्णोह।

---

इति 'न भाभूपू' इत्यत नेति चानुवर्तते इत्यभिप्रेत्य शेषम्पूरयति। **णत्वं न स्यादिति**॥ षान्तस्येति किम्। प्रणश्यति। **भूतपूर्वेति**॥ पूर्वं पकारस्य सत इदानीमादेशवशेन षान्तत्वाभावेऽपि णत्वनिषेधप्राप्त्यर्थमन्तग्रहणमित्यर्थः। **प्रनङ्क्ष्यतीति**॥ अत्र षस्य कत्वे कृतेऽपि भूतपूर्वगत्या षान्तत्वान्न णत्वमिति भावः। **तृप प्रीणने। तृप्तिस्तर्पणञ्चेति**॥ आद्ये अकर्मकः। द्वितीये सकर्मकः। रधादित्वाद्वेडिति मत्वा आह। **ततर्पिथ—ततर्प्थेति—तत्रप्थेति च**॥ 'अनुदात्तस्य चर्दुपधस्य' इत्यमिति भावः। ततृपिव—ततृप्व। **सिज्वेति**॥ पक्षे पुषाद्यङिति भावः। रधादित्वादिड्विकल्पः। तत्र सिचि इट्पक्षे आह। **अतर्पीदिति**॥ इडभावपक्षे आह। **अतार्प्सीदिति**॥ हलन्तलक्षणा वृद्धिरिति भावः। 'अनुदात्तस्य च' इत्यम्पक्षे आह। **अत्राप्सीदिति**॥ पुषाद्यङ्पक्षे आह। **अतृपदिति**॥ ङित्त्वान्न गुण इति भावः। **दृप हर्षेति**॥ तृपधातुवत्। ननु रधादित्वादेव वेट्कत्वादनिट्कारिकासु तृप्यतिदृप्यत्योः पाठो व्यर्थ इत्यत आह। **'रधादित्वादिमौ वेट्कावमर्थमनुदात्तता' इति**॥ द्रुह जिघांसायाम्। अनुदात्तत्वाभावेऽपि रधादित्वाद्वेट्। तत्र इडभावे आह। **वा द्रुहमुह इतीति। ध्रोक्ष्यतीति**॥ 'वा द्रुह' इति घत्वपक्षे दकारस्य भषि घस्य चर्त्वे सस्य षत्वे रूपम्। ढत्वपक्षेऽपि 'षढोः' इति कत्वे एतदेव रूपम्। तदाह। **ढत्वघत्वयोस्तुल्यं रूपमिति। अद्रुहदिति**॥ पुषादित्वादङिति भावः। मुहधातुरनुदात्तत्वाभावेऽपि रधादित्वात् वेट्। **मुमोहिथेति**॥ इट्पक्षे रूपम्। अनिट्पक्षे तु 'वा द्रुहमुह' इति घत्वं मत्वा आह। **मुमोग्धेति**॥ ढत्वपक्षे आह। **मुमोढेति। मोक्ष्यतीति**॥ घत्वढत्वयोस्तुल्यं रूपम्। ष्णुह ष्णिहेति षोपदेशौ। तदाह। **सुष्णोह। सिष्णेहेति**॥ थलादावनिट्पक्षे 'वा द्रुह'

सुष्णोहिथ—सुष्णोग्ध—सुष्णोढ । सुष्णुहिव—सुष्णुह्व । स्नोहिता—स्नोग्धा—स्नोढा । स्नोहिष्यति—स्नोक्ष्यति । अस्नुहत् । ष्णिह १२०१ प्रीतौ । स्निह्यति । स्निष्णेह । वृत् । रधादयः समाप्ताः । पुषादयस्तु आ गणान्तादिति सिद्धान्तः । शमु १२०२ उपशमे ।

## २५१९ । शमामष्टानां दीर्घः श्यनि । (७-३-७४)

शमादीनामित्यर्थः । प्रणिशाम्यति । शेमतुः । शेमिथ । शमिता । अशमत् । तमु १२०३ काङ्क्षायाम् । ताम्यति । तमिता । अतमत् । दमु १२०४ उपशमे । उपशम इति ण्यन्तस्य । तेन सकर्मकोऽयम् । न तु शमिवदकर्मकः । अदमत् । श्रमु १२०५ तपसि खेदे च । श्राम्यति । अश्रमत् । भ्रमु १२०६ अनवस्थाने । 'वा भ्राश—' (सू २३२१) इति श्यन्वा । तत्र कृते 'शमामष्टानाम्—' (२५१९) इति दीर्घः । भ्राम्यति । लुङ्यङ् । अभ्रमत् । शेषं भ्वादिवत् । क्षमू १२०७ सहने । क्षाम्यति । चक्षमिथ—चक्षंथ । चक्षमिव—चक्षण्व । चक्षमिम—चक्षण्म । क्षमिता—क्षन्ता । अयमषित् । भ्वादिस्तु षित् ।

'अषितः क्षाम्यतेः क्षान्तिः क्षमूषः क्षमतेः क्षमा' ।

---

इति घत्वविकल्प । पक्षे ढ । इति रधादय । **आ गणान्तादिति** ॥ दिवादिगणसमाप्तिपर्यन्ताः पुषादय इत्यर्थः । **सिद्धान्तः इति** ॥ माधवादिभिस्तथाऽभ्युपगमादिति भावः । **उपशमे इति** ॥ उपशमो नाशः इन्द्रियनिग्रहश्च । **शमामष्टानाम्** ॥ स्पष्टम् । बहुवचनात् शमादिग्रहणम् । तदाह । **शमादीनामिति** ॥ "शमस्तमुर्दमुरथ श्रमुर्भ्रमुरपि क्षमुः । क्लमुर्मदी चेत्येतेऽष्टौ शमादयः" इति स्थितिः । **दमु उपशमे इति** ॥ ननु शमु दमु उपशमे इत्येव पठितु युक्तमित्यत आह । **उपशम इति ण्यन्तस्येति** ॥ शमधातोर्हेतुमण्ण्यन्तात् घञि 'नोदात्तोपदेशस्य' इति वृद्ध्यभाव इत्यर्थः । ततः किमित्यत आह । **तेनेति** ॥ ततश्च दाम्यतीत्यस्य शमयतीत्यर्थः । **शेषं भ्वादिवदिति** ॥ आर्धधातुकेषु शप्पक्षे च भ्वादिवदित्यर्थः । क्षमू सहने । ऊदित्त्वात् थलि वमादौ च इड्विकल्पः । तदाह । **चक्षमिथेत्यादि** ॥ षित्त्वाषित्त्वयोः फलभेद श्लोकार्धेन सङ्गृह्णाति । **अषितः इति** ॥ अषित क्षाम्यतेः श्यन्विकरणपठितस्य क्षमधातो क्तिनि क्षान्तिः इति रूपम् । अषित्त्वात् 'षिद्भिदादिभ्यः' इत्यङ् न । क्षमूषस्तु भौवादिकात् षितः आत्मनेपदे शपि क्षमते इति रूपम् । क्तिन बाधित्वा षित्त्वादङि क्षमेति रूपञ्चेत्यर्थः । क्लमु ग्लानौ । नन्वस्य शमादिगणात् बहिरेव दिवादिगणे पाठोऽस्तु । नच 'शमामष्टानाम्' इति दीर्घार्थं शमादिगणे अस्य पाठ इति वाच्यम् । 'ष्ठिवुक्लम्वाचमा शिति' इत्येव शपि परे इव श्यनि परेऽपि दीर्घसिद्धेः । नच 'ष्ठिवुक्लम्वाचमां शिति' इत्यत्रैव क्लमुग्रहण त्यज्यतामिति वाच्यम् । शपि

विदारणे । भिनत्ति । भिन्ते । भेत्ता । भेत्स्यति । अभिनत्--अभिनः । अभिनदम् । अभिन्त । अभिदत्--अभैत्सीत् । अभित्त । छिदिर् १४४१ द्वैधीकरणे । अच्छिदत्--अच्छैत्सीत् । अच्छित्त । रिचिर् १४४२ विरेचने । रिणक्ति । रिङ्क्ते । रिरेच । रिरिचे । रेक्ता । अरिणक् । अरिचत्--अरैक्षीत् । अरिक्त । विचिर् १४४३ पृथग्भावे । विनक्ति। विङ्क्ते । क्षुदिर् १४४४ सम्पेषणे । क्षुणत्ति । क्षुन्ते । क्षोत्ता । अक्षुदत्--अक्षौत्सीत् । अक्षुत्त । युजिर् १४४५ योगे । योक्ता । उ छृदिर् १४४६ दीप्तिदेवनयोः । छृणत्ति । छृन्ते । चच्छर्द । 'सेऽसिचि—' (सू २५०६) इति वेट् । चच्छृदिषे--चच्छृत्से । छर्दिता । छर्दिष्यति--छर्त्स्यति । अच्छृदत्--अच्छर्दीत् । अच्छर्दिष्ट । उ तृदिर् १४४७ हिंसानादरयोः । तृणत्तीत्यादि । कृती १४४८ वेष्टने । परस्मैपदी । कृणत्ति । आर्धधातुके तौदादिकवत् । ञि इन्धी १४४९ दीप्तौ । त्रय आत्मनेपदिनः ।

## २५४४ । श्नान्न लोपः । (६-४-२३)

श्नमः परस्य नस्य लोपः स्यात् । श्नसोरल्लोपः । (सू २४६९) । इन्धे । इन्त्से । इन्धिता । इनधै । ऐन्ध । ऐन्धाः । खिद १४५० दैन्ये ।

---

'झलो झलि' इति सिज्लोपः । **भिनत्तीति** ॥ भिन्तः । भिन्दन्ति । भिनत्सि । भिन्थः । भिनद्मि । भिन्द्व । भिन्द्मः । **भिन्ते इति** ॥ भिन्दाते । भिन्दते । भिन्त्से । भिन्दाथे । भिन्ध्वे । भिन्दे । भिन्द्वहे । बिभेद । बिभेदिथ । बिभिदिव । बिभिदे । बिभिदिषे । **अभिन्तेति** ॥ लङि तङि रूपम् । **अभिनत्–अभिनः इति** ॥ 'दश्च' इति रुर्वेति भावः । लुङः परस्मैपदे आह । **अभिदत्–अभैत्सीदिति** ॥ इरित्त्वादङ् वेति भावः । लुङि तङयाह । **अभित्तेति** ॥ 'झलो झलि' इति सिज्लोपः । अभित्साताामित्यादि । **उ छृदिरिति** ॥ उकार इत् । 'उदितो वा' इति क्त्वायामिड्विकल्पार्थः । ञि इन्धी दीप्तौ । ईदित्त्व 'श्वीदित ' इत्येतदर्थम् । श्नमि कृते इन न् ध् ते इति स्थिते । **श्नान्न लोपः** ॥ श्नम्प्रत्ययैकदेशस्य श्न इत्यस्य श्नादिति पञ्चमी । नेति लुप्तषष्ठीकम् । तदाह । **श्नमः परस्य नस्येति** ॥ नकारस्येत्यर्थः । अकार उच्चारणार्थः । तथाच इन ध् ते इति स्थिते आह । **श्नसोरल्लोपः इति** ॥ तथाच इन्ध् ते इति स्थिते 'झषस्तथो ' इति तकारस्य धत्वे पूर्वधस्य जश्त्वे परिनिष्ठितमाह । **इन्धे इति** ॥ यद्यपि 'अनिदिताम् ' इत्येवात्र नलोपः सिद्ध्यति । तथापि अनक्ति इत्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तमिति भावः । इन्धते । इन्त्से । इन्धाम् । इन्त्स्व । इन्ध्वम् । **इनधै इति** ॥ श्नमि उत्तमस्य इटः एत्वे आटि वृद्धौ इन न् ध् ए इति स्थिते श्नान्नलोपे आटः पित्त्वेन ङित्त्वाभावात् 'श्नसोरल्लोपः' इत्यभावे रूपमिति भावः । अत्र नलोपार्थमपि श्नान्न

खिन्ते । खेत्ता । विद १४५१ विचारणे । विन्ते । वेत्ता ।

अथ परस्मैपदिनः । शिष्लृ १४५२ विशेषणे । शिनष्टि । शिष्टः । शिंषन्ति । शिशेषिथ । शेष्टा । शेक्ष्यति । हेर्धिः । जश्त्वम् । ष्टुत्वं 'झरो झरि—' (सू ७१) इति वा डलोपः । अनुस्वारपरसवर्णौ शिण्ढि—शिण्ड्ढि । शिनषाणि । अशिनट् । लृदित्त्वादङ् । अशिषत् । पिष्लृ १४५३ संचूर्णने । शिषिवत् । पिनष्टि । भञ्जो १४५४ आमर्दने । भनक्ति । बभञ्जिथ । बभङ्क्थ । भङ्क्ता । भुज १४५५ पालनाभ्यवहारयोः । भुनक्ति । भोक्ता । भोक्ष्यति । अभुनक् । तृह १४५६ हिंसि १४५७ हिंसायाम् ।

---

लोप इत्यावश्यकम् । आट पित्त्वेन ङित्त्वाभावात् 'अनिदिताम्' इत्यस्याप्रवृत्ते । इनधावहै । लङ्या-ह् । **ऐन्धेति । ऐन्धाः इति** ॥ 'झषस्तथो.' इति थस्य धः । इन्धीत । लुङि ऐन्धिष्ट । शिष्लृ विशेषणे । अनिट् । **शिशेषिथेति** ॥ अजन्ताकारवत्त्वाभावात् क्रादिनियमान्नित्यमिट् । शि न ष् हि इति स्थिते अल्लोपे शि न् ष् हि इति स्थिते आह । **हेर्धिरिति** ॥ शिन् ष् धि इति स्थिते आह । **जश्त्वमिति** ॥ 'झला जश् झशि' इति षस्य ड इति भाव. । **ष्टुत्वमिति** ॥ धस्य ढ इति भाव । यद्यपि जश्त्वस्यासिद्धत्वात्ततः प्रागेव ष्टुत्वस्य उपन्यासो युक्त । तथापि जश्त्व ष्टुत्वमिति प्रक्रियाप्रदर्शनमात्रपर क्रमस्तु न विवक्षितः । **झरः इति** ॥ जश्त्वसम्पन्नस्य डस्य लोपविकल्प इत्यर्थ. । **अनुस्वारपरसवर्णाविति** ॥ नकारस्य 'नश्च' इत्यनुस्वारे सति तस्य परसवर्णो णकार इत्यर्थ । 'न पदान्त' इति निषेधान्नाल्लोप· स्थानिवत् । ढस्य लोपपक्षे उदाहरति । **शिण्ढीति** ॥ ढस्य लोपाभावे उदाहरति । **शिण्ड्ढीति** ॥ वस्तुतस्तु सानुस्वार एव पाठ उचित. 'दीर्घादाचार्याणाम्' इत्युत्तर 'अनुस्वारस्य ययि परसवर्ण' 'वा पदान्तस्य' 'तोर्लि' 'उद. स्थास्तम्भ्वोः पूर्वस्य' झयो होऽन्यतरस्याम् । 'शश्छोटि' इति षट्सूत्रपाठोत्तर 'झलाञ्जश्झशि' 'अभ्यासे चर्च' 'खरि च' 'वावसाने' 'अणोऽप्रगृह्यस्यानुनासिक' इति पञ्चसूत्रपाठ इति भाष्यसम्मताष्टाध्यायीपाठे परस-वर्णदृष्ट्या 'झलाञ्जश्झशि' इत्यस्य 'झरो झरि' इत्यस्य चासिद्धत्वेन यय्परत्वाभावे परसवर्णाप्राप्ति-रिति शब्देन्दुशेखरे स्थितम् । शिष्टात् । शिष्टम् । शिष्ट । **शिनषाणीति** ॥ आटः पित्त्वेन ङित्त्वा-भावात् 'श्नसोः' इत्यल्लोपो नेति भावः । **अशिनडिति** ॥ लङस्तिपो हल्ङ्यादिलोपे षस्य जश्त्वमिति भाव· । अशिष्टाम् । अशिषन् । अशिनट् । अशिष्टम् । अशिष्ट । अशिनषम् । अशिष्व । अशिष्म । भञ्जो आमर्दने । **भनक्तीति** ॥ श्नमि भ न न् ज् ति इति स्थिते 'श्नान्न लोपः' इति नलोप इति भाव· । भङ्क्तः । भञ्जन्तीत्यायूह्यम् । भारद्वाजनियमात्थलि वेडिति मत्वा आह । **बभञ्जिथ–बभङ्क्थेति** ॥ **भङ्क्तेति** ॥ अनिडिति भावः । **भुज पालनेति** ॥ 'भुजोऽनवने' इति तङ् वक्ष्यते । भुङ्क्ते । भुञ्जाते इत्यादि । तृह, हिसि, हिसायाम् । ऋदुपध· ।

## २५४५ । तृणह इम् । (७-३-९२)

तृहः श्नमि कृते इमागमः स्याद्धलादौ पिति । तृणेढि । तृण्ढः । ततर्ह । तर्हिता । अतृणेट् । हिनस्ति । जिहिंस । हिंसिता । उन्दी १४५८ क्लेदने । उनत्ति । उन्तः । उन्दन्ति । उन्दाञ्चकार । औनत् । औन्ताम् । औन्दन् । औनः–औनत् । औनदम् । अञ्जू १४५९ व्यक्तिमर्षणकान्तिगतिषु । अनक्ति । अङ्क्तः । अञ्जन्ति । आनञ्ज । आनञ्जिथ--आनङ्क्थ । अङ्क्ता । अञ्जिता । अङ्ग्धि । अनजानि । आनक् ।

---

सेट् । श्नमि कृते णत्वे तृणह् ति इति स्थिते । **तृणह इम्** ॥ तृणह इति षष्ठी । कृतश्नमः तृहधातोर्निर्देश. । 'नाभ्यस्तस्य' इत्यत पितीति 'उतो वृद्धिः' इत्यत हलीति चानुवर्तते । फलितमाह । **तृहः श्नमि कृते इति** ॥ मित्त्वादच· पर· । श्नमि कृते इत्यनुक्तौ तु येन नाप्राप्तिन्यायेन इमागमेन श्नम् बाध्येत । "सत्यपि सम्भवे बाधनम्भवति" इति न्यायात् । अन्यथा "ब्राह्मणेभ्यो दधि दीयताम् । तक्र कौण्डिन्याय" इत्यत्र तक्रेण दधि न बाध्येन । श्नमा शप्च न बाध्येत । देशभेदेन उभयसम्भवादिति भाव· । **तृणेढीति** ॥ तृणह् ति इति स्थिते इमागमे आद्गुणे तृणे ह् ति इति स्थिते । ढत्वधत्वष्टुत्वढलोपा इति भावः । **तृण्ढः इति** ॥ तासि श्नमि कृते तृणह् तस् इति स्थिते तसः अपित्त्वादिमागमाभावे श्नसो' इत्यल्लोपे ढत्वधत्वष्टुत्वढलोपा इति भाव । तृहन्ति । तृणेक्षि । तृण्ढः । तृण्ढ । तृणेह्मि । तृह्व । तृह्म· । **ततर्हेति** ॥ ततृहतुः । ततर्हिथ । ततृहिव । **तर्हितेति** ॥ सेडिति भाव· । तर्हिष्यति । तृणेढु–तृण्ढात् । तृण्ढाम् । तृंहन्तु । तृण्ढि–तृण्ड्ढ । तृण्ढात् । तृण्ढम् । तृण्ढ । तृणहानि । तृणहाव । तृणहाम । **अतृणेडिति** ॥ लङस्तिपि श्नमि इम् हल्ङयादिलोपः ढत्वजश्त्वे इति भाव । अतृण्ढाम् । अतृहन् । अतृणेट् । अतृण्ढम् । अतृण्ढ । अतृणहम् । अतृह्व । अतृह्म । तृह्यात् । तृह्यात् । अतर्हीत् । अतर्हिष्यत् । हिंसिधातोरुदाहरति । **हिनस्तीति** ॥ इह श्नमि इदित्त्वान्नुमि च कृते 'श्नान्नलोप.' इति नुमो लोप इति भावः । हिंस्तः । हिंसन्ति । हिनस्सि । हिंस्थः । हिंस्थ । हिनस्मि । हिंस्वः । हिंस्म· । **जिहिंसेति** ॥ किति इदित्त्वान्नलोपो न । जिहिंसतु. । जिहिंसिथ । **हिंसितेति** ॥ सेडिति भावः । हिंसिष्यति । हिनस्तु । हिंस्ताम् । हौ श्नमि नुमि कृते 'श्नान्नलोपः' इति नुमो लोपे हेरपित्त्वेन ङित्त्वात् 'श्नसोः' इत्यल्लोपे 'धि च' इति सलोपे, हिन्धि इति रूपम् । हिंस्तात् । हिनसानि । अहिनत् । अहिंस्ताम् । अहिंसन् । सिपि रुर्वा । अहिन –अहिनत् । अहिंस्तम् । अहिनसम् । अहिंस्व । हिंस्यात् । हिंस्याताम् । आशीर्लिङि श्नमभावान्नुमेव । इदित्त्वान्नलोपो न । हिंस्यादित्येव । हिंस्यास्ताम् । अहिंसीत् । अहिंसिष्यत । उन्दी क्लेदने । **उन्दन्तीति** ॥ उनत्सि । उन्थः । उनद्मि । उन्द्वः । **उन्दामिति** ॥ इजादेश्चेत्याम् । उन्दिता । उन्दिष्यति । उनत्तु–उन्तात् । उन्धि । उनदानि । लङयाह । **औनदिति** ॥ औन्ताम् । औन्दन् । औनः–औनत् । औनदम् । औन्द्व । उन्द्यात् । उद्यात् । अञ्जूधातुः

### २५४६ । अञ्जेः सिचि । (७-२-७१)

अञ्जेः सिचो नित्यमिट् स्यात् । आञ्जीत् । तञ्चू १४६० सङ्कोचने । तङ्क्ता—तञ्चिता । ओ विजी १४६१ भयचलनयोः । विनक्ति । विङ्क्तः । 'विज इट्' (सू २५३६) इति ङित्त्वम् । विविजिथ । विजिता । अविनक् । अविजीत् । वृजी १४६२ वर्जने । वृणक्ति । वर्जिता । पृची १४६३ सम्पर्के । पृणक्ति । पपर्च ।

इति तिङन्तरुधादिप्रकरणम् ।

---

नोपधः । कृतपरसवर्णनिर्देश. । ऊदित्त्वाद्वेट् । **अनक्तीति** ॥ श्नमि कृते परसवर्णस्यासिद्धत्वात् 'श्नान्न लोप.' इति नकारलोपे जस्य कुत्वेन ग. तस्य चर्त्वेन क. इति भावः । **अङ्क्तः इति** ॥ नलोपे अल्लोपे जस्य कुत्वेन गः गस्य चर्त्वेन क श्नमो नस्य परसवर्णो ङ इति भाव. । **अञ्जन्तीति** ॥ नलोपाल्लोपौ । श्नमो नस्य परसवर्णो ञ इति भाव' । अनङ्क्षि । अङ्क्थः । अनज्मि । अञ्ज्वः । **अङ्ग्धीति** ॥ हौ श्नमि धिभावे नलोपाल्लोपौ । जस्य कुत्वेन गकारः नस्य परसवर्णो ङकार इति भावः । **अनजानीति** ॥ श्नान्नलोप. । आटः पित्त्वादल्लोपो न । लङ्याह । **आनगिति** ॥ आङ्क्ताम् । आञ्जन् । अञ्ज्यात् । अज्यात् । **अञ्जेस्सिचि** ॥ 'इडत्यर्ति' इत्यत' इडित्यनुवर्तते । ऊदित्त्वादेव सिद्धे नित्यार्थमिदम् । तदाह । **अञ्जेरित्यादिना** ॥ तञ्चू सङ्कोचने । नोपधः कृतपरसवर्णनिर्देश । अञ्जूवद्रूपाणि । यथायोग्यमूह्यानि । **ओ विजीति** ॥ ओकार इत् । अनिट्सु इरितो ग्रहणादय सेट् ॥

इति श्रीवासुदेवदीक्षितविदुषा विरचिताया सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां श्नम्विकरण समाप्तम् ।

। श्रीरस्तु ।

# ॥ अथ तिङन्ततनादिप्रकरणम् ॥

अथ सप्त स्वरितेतः । तनु १४६४ विस्तारे । 'तनादिकृञ्भ्य उः' (सू २४६६) । तनोति । तन्वः–तनुवः । तनुते । ततान । तेने । तनु । अतनीत्–अतानीत् ।

## २५४७ । तनादिभ्यस्तथासोः । (२-४-७९)

तनादेः सिचो वा लुक्स्यात्तथासोः । थासा साहचर्यादेकवचनतशब्दो गृह्यते । तेनेह न । यूयमतनिष्ट--अतानिष्ट । 'अनुदात्तोपदेश—'

---

अथ उविकरणधातवो निरूप्यन्ते । तनुधातुरुदित् । 'उदितो वा' इति प्रयोजनम् । **तनादिकृञ्भ्य उः** ॥ कर्त्रर्थे सार्वधातुके तनादिभ्यः कृञश्च उप्रत्यय स्यात् स्मार्थे इत्यर्थ । शपोऽपवाद । **तनोतीति** ॥ उप्रत्ययस्य तिपमाश्रित्य गुणः । तसादौ तु ङित्त्वान्न गुणः । तनुतः । झोऽन्तादेशे कृते उवङम्बाधित्वा 'हुश्नुवो' इति यण् । तन्वन्ति । तनोषि । तनुथ । तनुथ । तनोमि । 'लोपश्चास्यान्यतरस्याम्' इत्युकारलोपविकल्पमभिप्रेत्याह । **तन्वः–तनुवः इति** ॥ तङ्याह । **तनुते इति** ॥ तन्वाते । तन्वते । तनुषे । तन्वाथे । तनुध्वे । तन्वे । तनुवहे । तन्वहे । तनुमहे । तन्महे । **ततानेति** ॥ तेनतु. । तेनिथ । तेन । तेनिव । तङ्याह । **तेने इति** ॥ तेनाते । तेनिरे । तेनिषे । तेनाथे । तेनिध्वे । तेने । तेनिवहे । तेनिमहे । तनिता । तनिष्यति । तनिष्यते । तनोतु–तनुतात् । तनुताम् । तन्वन्तु । 'उतश्च प्रत्ययात्' इति हेर्लुक मत्वा आह । **तन्विति** ॥ तनुतात् । तनुतम् । तनुत । तनवानि । तनवाव । तनवाम । अतनोत् । अतनुताम् । अतन्वन् । अतनोः । अतनवम् । अतन्व । अतनुव । तनुयात् । तन्वीत । तनिषीष्ट । अतो हलादेरिति वृद्धिविकल्पं मत्वा आह । **अतनीत्–अतानीदिति** ॥ अतानिष्टाम् । अतनिषुः । अतनीः । अतानिष्टम् । अतानिष्ट । अतनिषम् । अतानिष्व । अतनिष्म । वृद्धिपक्षे अतानिष्टामित्यादि । अतनिष्यत् । लुङ प्रथमैकवचने मध्यमपुरुषैकवचने च विशेषमाह । **तनादिभ्यस्तथासोः** ॥ 'गातिस्था'इत्यतास्सिच इति'ण्यक्षत्रियार्ष'इत्यतो लुङीति 'विभाषा घ्राधेट्' इत्यतो वेति चानुवर्तते । तदाह । **तनादेरित्यादिना** ॥ **एकवचनतशब्दो गृह्यते इति** ॥ नतु लुङादेशपरस्मैपदमध्यमपुरुषबहुवचनतादेशोऽपीत्यर्थः । **यूयमिति** ॥ लुङि मध्यमपुरुषबहुवचने सिचि वृद्धिविकल्पे सति अतनिष्ट, अतानिष्टेत्यत्र सिचो नाय लुग्विकल्प इत्यर्थ. । तदेव प्रत्युदाहरणमुक्त्वा सूत्रस्योदाहरणं वक्ष्यन् प्रक्रियां दर्शयति । **अनुदात्तोपदेशेत्यनुनासिकलोपः । तङीति** ॥ तङि प्रथमैकवचने तशब्दे मध्यमपुरुषैकवचने थासि च सिचो लुकि 'अनुदात्तोपदेश' इति नकारस्य लोप इत्यर्थः । तदाह । **अतत**

(सू २४२८) इत्यनुनासिकलोपः । तङि । अतत–अतनिष्ट । अतथाः–अतनिष्ठाः । षणु १४६५ दाने । सनोति । सनुते । 'ये विभाषा' (सू २३१९) । सायात्–सन्यात् । 'जनसन—' (२५०४) इत्यात्त्वम् । असात–असनिष्ट । असाथाः–असनिष्ठाः । क्षणु १४६६ हिंसायाम् । क्षणोति । क्षणुते । 'ह्म्यन्त—' (सू २२९९) इति न वृद्धिः । अक्षणीत् । अक्षत–अक्षणिष्ट । अक्षथाः–अक्षणिष्ठाः । क्षिणु १४६७ च । उप्रत्ययनिमित्तो लघूपधगुणः । 'संज्ञापूर्वको विधिरनित्यः' (९४) इति न भवतीत्यात्रेयादयः । भवत्येवेत्यन्ये । क्षिणोति–क्षेणोति । क्षेणितासि । क्षेणितासे । अक्षेणीत् । अक्षित–अक्षेणिष्ट । ऋणु १४६८ गतौ । ऋणोति–अर्णोति । अर्णुतः । अर्णुवन्ति । आनर्ण । आनृणे । अर्णितासि । आर्णीत् । आर्त–आर्णिष्ट । आर्थाः–आर्णिष्ठाः । तृणु १४६९ अदने । तृणोति–तर्णोति । तृणुते–तर्णुते । घृणु १४७० दीप्तौ । जघर्ण । जघृणे ।

अथ द्वावनुदात्तेतौ । वनु १४७१ याचने । वनुते । ववने । चान्द्रमते परस्मैपदी । वनोति । ववान । मनु १४७२ अवबोधने । मनुते । मेने । डु कृञ् १४७३ करणे । करोति । 'अत उत्सार्वधातुके' (सू २४६७) कुरुतः । यण् 'न भकुर्छुराम्' (सू १६२९) इति न दीर्घः । कुर्वन्ति ।

## २५४८ । नित्यं करोतेः । (६-४-१०८)

---

**अतनिष्टेति** ॥ **अतथाः–अतनिष्ठाः इति च** ॥ अतनिषाथामित्यादि सुगमम् । 'षणु दाने' । षोपदेशोऽयम् । तनुवद्रूपाणि । **असातेति** ॥ सिचो लुक्पक्षे रूपम् । **असनिष्टेति** ॥ इट् । झलादिपरकत्वाभावादात्वन्नेति भावः । क्षणुधातुरदुपधः । "वज्रेऽध्वर्युः क्षण्वीत" इति तैत्तिरीये । **क्षिणु चेति** ॥ इदुपधः । अयमपि हिंसायामित्यर्थः । "वज्रेऽध्वर्युः क्षिण्वीत" इति शाखान्तरं शाबरभाष्ये उदाहृतम् । ननु क्षिणोतीत्यत्र उप्रत्ययमाश्रित्य इकारस्य लघूपधगुणः कस्मान्नेत्यत आह । **उप्रत्ययनिमित्तः इति** ॥ 'ऋणु गतौ' । अत्रापि क्षणुवत् । मतभेदाल्लघूपधगुणतदभावौ । तदाह । **ऋणोति–अर्णोतीति** ॥ एवमग्रेऽपि । **अर्णुवन्तीति** ॥ सयोगपूर्वकत्वात् 'हुश्नुवोः' इति न यणिति भावः । डु कृञ् करणे । **करोतीति** ॥ उप्रत्ययमाश्रित्य ऋकारस्य गुणः रपरत्वम् । उकारस्य तु तिपमाश्रित्य गुणः । **कुरुतः इति** ॥ तसो ङित्त्वादुकारस्य न गुणः । कुरु अन्ति इति स्थिते उवङमाशङ्क्य आह । **यणिति** ॥ 'हुश्नुवोः' इत्यनेनेति शेषः। उकारस्य यणि कुर्व् अन्ति इति स्थिते 'हलि च' इति दीर्घमाशङ्क्य आह । **नभेति** ॥ वसि मसि च 'लोपश्चास्यान्यतरस्याम्' इत्युकारलोपविकल्पे प्राप्ते। **नित्यं करोतेः** ॥ 'उतश्च प्रत्य-

करोतेः प्रत्ययोकारस्य नित्यं लोपः स्याद्वमयोः परयोः । कुर्वः । कुर्मः । चकर्थ । चकृव । कर्ता । करिष्यति ।

## २५४९ । ये च (६-४-१०९)

कृञ उलोपः स्याद्यादौ प्रत्यये परे । कुर्यात् । आशिषि क्रियात् । कृषीष्ट । अकार्षीत् । 'तनादिभ्यः—' (सू २५४७) इति लुकोऽभावे 'ह्रस्वादङ्गात्' (सू २३६९) इति सिचो लोपः । अकृत । अकृथाः ।

## २५५० । संपरिभ्यां करोतौ भूषणे । (६-१-१३७)

## २५५१ । समवाये च । (६-१-१३८)

सम्परिपूर्वस्य करोतेः सुट् स्याद्भूषणे सङ्घाते चार्थे । संस्करोति । अलङ्करोतीत्यर्थः । संस्कुर्वन्ति । सङ्घीभवन्तीत्यर्थः । संपूर्वस्य क्वचिदभूषणेऽपि सुट् । 'संस्कृतं भक्षाः' (सू १२१७) इति ज्ञापकात् । 'परिनिविभ्यः—' (सू २२७५) इति षः । परिष्करोति । 'सिवादीनां वा—' (सू २३५९) । पर्यष्कार्षीत्—पर्यस्कार्षीत् ।

## २५५२ । उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च । (६-१-१३९)

उपात्कृञः सुट् स्यादेष्वर्थेषु । चात्प्रागुक्तयोरर्थयोः । प्रतियत्नो गुणाधानम् । विकृतमेव वैकृतं विकारः । वाक्यस्याध्याहारः आकाङ्क्षितैकदेशपूरणम् ।

---

यात्' इत्यनुवर्तते। 'लोपश्चास्यान्यतरस्याम्' इत्यतः लोपः म्वोरिति च। तदाह। **करोतेरिति** ॥ **चकर्थेति**॥ 'कृसृभृवृ' इति नेडिति भाव. । अजन्तत्वेऽपि ऋदन्तत्वात् भारद्वाजमतेऽपि नेट् । **करिष्यतीति** ॥ करोतु—कुरुतात् । कुरु । करवाणि । कुरुताम् । कुर्वाताम् । करवै । करवावहै । करवामहै । अकरोत् । अकुरुताम् । अकुरुत । अकुर्वाताम् । बिधिलिङि कुरु यात् इति स्थिते । **ये च** ॥ 'लोपश्चास्यान्यतरस्याम्'इत्यतो लोप इति अस्येति चानुवर्तते। अस्येत्यनेन पर्वसूत्रे उत इत्युपात्तः उत्परामृश्यते। 'नित्यङ्करोतेः' इत्यतः करोतेरित्यनुवर्तते। अङ्गाक्षिप्त प्रत्ययो यकारेण विशेष्यते तदादिविधिः। तदाह । **कृञः उलोपः इति । आशिषि क्रियादिति** ॥ 'रिङ् शयग्लिङ्क्षु' इति रिङिति भाव। **कृषीष्टेति** ॥ 'उश्च' इति कित्त्वान्न गुण इति भावः । **अकार्षीदिति** ॥ सिचि वृद्धौ रपरत्वमिति भाव । ननु लुङस्तङि अकृ स् त इति स्थिते 'तनादिभ्यस्तथासोः' इति सिचो लुकि अकृतेतीष्ट सिद्ध्यति । सिचो लुगभावे तु सकार श्रूयेतेत्यत आह । **तनादिभ्यः इत्यादि** ॥ **संपरिभ्याम्** । **समवाये च** ॥ **सुट् स्यादिति** ॥ 'सुट् कात्पूर्व.' इत्यतः 'नित्य करोते' इत्यतश्च तदनुवृत्तेरिति भावः । **प्रागुक्तयोरिति** ॥ भूषणसमवाययोरित्यर्थ. । ननु 'सपरिभ्याम्' इति सुट् पदद्वयापेक्षत्वात्

उपस्कृता कन्या । अलङ्कृतेत्यर्थः । उपस्कृताः ब्राह्मणाः । समुदिता इत्यर्थः । एधो दकस्योपस्कुरुते । गुणाधानं करोतीत्यर्थः । उपस्कृतं भुङ्क्ते । विकृतमित्यर्थः । उपस्कृतं ब्रूते । वाक्याध्याहारेण ब्रूते इत्यर्थः ।

## २५५३ । सुट्कात्पूर्वः । (६-१-१३५)

'अडभ्यासव्यवायेऽपि' इत्युक्तम् । सञ्चस्कार । 'कात्पूर्वः' इत्यादि भाष्ये प्रत्याख्यातम् । तथा हि 'पूर्वं धातुरुपसर्गेण युज्यते' । अन्तरङ्गत्वात्सुट् । ततो द्वित्वम् । एवं च 'ऋतश्च संयोगादेर्गुणः' (सू २३८९) सञ्चस्करतुः । 'कृसृभृवृ–' (सू २२९३) सूत्रे 'ऋतो भारद्वाजस्य' (सू २२९६)

---

बहिरङ्गः । 'लिटि धातोः' इति द्वित्वन्तु प्रकृतिप्रत्ययमात्रापेक्षत्वादन्तरङ्गम् । ततश्च सञ्चस्कार इत्यत्र परमपि सुट बाधित्वा द्वित्वे कृते अभ्यासात्प्रागेव सुटि प्राप्ते । **सुट्कात्पूर्वः** ॥ षष्ठस्याद्यपादे इद सूत्रम् । 'सम्परिभ्याङ्करोतौ भूषणे' 'समवाये च' 'उपात्प्रतियत्न' इत्यारभ्य 'अनुदात्त पदमेक-वर्जम्' इत्यतः प्रागिदमधिकृत वेदितव्यमित्यर्थः । एवञ्च पूर्व इत्युक्तेरभ्यासात् प्राक् न सुडिति भाव । नन्वभ्यासेन व्यवधानात्कथमिह उत्तरखण्डस्य सुट्। सस्करीतीत्यादौ अव्यव-हिते सुड्विधेश्चरितार्थत्वात् । किञ्च समस्करोत् इत्यत्र अटा व्यवधानात् कथ सुट् । नह्यडागम कृभ्भक्त । अङ्गभक्तत्वात् । विकरणान्तस्यैवाङ्गत्वादित्यत आह । **अडभ्यासव्यवायेऽपी-त्युक्तमिति** ॥ वार्तिकमिति शेषः । अटा अभ्यासेन च व्यवधानेऽपि सम्पर्यादिभ्यः परस्मात् कात्पूर्वस्सुडित्यर्थः । **इत्यादीति** ॥ सुट् इत्येवाधिकृतमस्तु 'कात्पूर्वः' इति 'अडभ्यासव्यवायेऽपि' इति मास्त्वित्येव भाष्ये प्रत्याख्यातमित्यर्थः । तदेवापपादयितु प्रतिजानीते । **तथा हीति** ॥ **पूर्वं धातुरुपसर्गेण युज्यते इति** ॥ पश्चात्साधनेनेति शेषः। ततश्च पूर्वोपनिपातितधातूपसर्ग-सम्बन्धनिमित्तकङ्कार्यं पश्चादनुपतिष्यद्धातुप्रत्ययसम्बन्धनिमित्तकात्कार्यादन्तरङ्गम् । प्रथमोपस्थि-तत्वात् । तदुक्त भाष्ये । "पूर्वं धातुरुपसर्गेणेति कृत्वा धातूपसर्गयोः कार्यमन्तरङ्गम्" इति । तदाह । **अन्तरङ्गत्वात्सुट् । ततो द्वित्वमिति** ॥ तथा सुटि कृते स्कृ इत्यस्य द्वित्वे उरदत्त्वे रपरत्वे 'शर्पूर्वाः खयः' इति रेफसकारयोर्निवृत्तौ अभ्यासचुत्वे सञ्चस्कारेति रूपसिद्धेः 'कात्पूर्वः' इति अडभ्यासव्यवायेऽपि, इति च न कर्तव्यमिति भावः । एव समस्करोदित्यत्रापि विकरणान्ताङ्गभक्ताडागमापेक्षया अन्तरङ्गत्वात् प्रथम सुड् भविष्यतीति कृत्वा अड्व्यवायेऽपी-त्यशो न कर्तव्य इत्यूह्यम् । पूर्वं धातुरुपसर्गेणत्याश्रयणे फलान्तरमप्याह । **एवञ्चेति** ॥ उक्तरीत्या अन्तरङ्गत्वात् सुटि कृते सस्कृ इत्यस्माल्लिटः अतुसि 'ऋतश्च सयोगादेर्गुणः' इति गुणे सञ्चस्करतुरिति सिद्ध्यति । "पूर्वं धातुस्साधनेन युज्यते" इत्याश्रयणे तु चकरतुरिति परिनिष्ठितस्य समित्युपसर्गसयोगासिद्धेरिति भावः । ननु सञ्चस्करिव, सञ्चस्करिम, इत्यत्र च 'कृसृभृवृ' इति 'ऋतो भारद्वाजस्य' इति च इण्निषेधः स्यादित्यत आह । **कृसृभृवृ सूत्रे इत्यादि** ॥ नन्वाशीर्लिङि सास्क्रियादित्यत्र 'गुणोऽर्तिसंयोगाद्यो' इति गुणः कुतो नेत्यत

इति सूत्रे च 'कृञोऽसुट इति वक्तव्यम्' (वा ४४०१) 'तेन ससुट्कात्पर-स्येट्'। सञ्चस्करिथ। सञ्चस्करिव। 'गुणोऽर्ति–' (सू २३८०) इति सूत्रे 'नित्यं छंदसि' (सू ३५८७) इति सूत्रात् 'नित्यम्' इत्यनुवर्तते। 'नित्यं यः संयोगादिस्तस्य' इत्यर्थात् सुटि गुणो न। संस्क्रियात्। 'ऋतश्च संयोगादेः' (सू २५२६) इति लिङ्सिचोर्नेट्। 'एकाच उपदेशे–' (सू २२७६) इति सूत्रात् 'उपदेशे' इत्यनुवर्त्य 'उपदेशे यः संयोगादिः' इति व्याख्यानात्। संस्कृषीष्ट। समस्कृत। समस्कृषाताम्।

इति तिङन्ततनादिप्रकरणम्।

---

आह। **गुणोऽर्तीत्यादि**॥ ननु तङि संस्कृषीष्ट, इति लिङि समस्कृत, समस्कृषाताम्, इति लुङि च 'ऋतश्च संयोगादेः' इति इट् कुतो नेत्यत आह। **ऋतश्चेत्यादि**॥

इति श्रीवासुदेवदीक्षितविदुषा विरचिताया सिद्धान्तकौमुदीव्याख्याया बालमनोरमायां उविकरणनिरूपण समाप्तम्।

। श्रीरस्तु ।

# ॥ अथ तिङन्तक्र्यादिप्रकरणम् ॥

डु क्रीञ् १४७४ द्रव्यविनिमये ।

## २५५४ । क्र्यादिभ्यः श्ना । (३-१-८१)

क्रीणाति । 'ई हल्यघोः' (सू २४९७) । क्रीणीतः । ईत्वात्पूर्वं झेरन्तादेशः । परत्वान्नित्यत्वादन्तरङ्गत्वाच्च । एवं झस्य अद्भावः । ततः 'श्नाभ्यस्तयोः–' (सू २४८३) इत्याल्लोपः । क्रीणन्ति । क्रीणीते । क्रीणाते । क्रीणते । चिक्राय । चिक्रियतुः । चिक्रयिथ–चिक्रेथ । चिक्रियिव । चिक्रियिषे । क्रेता । क्रेष्यति । क्रीयात् । क्रेषीष्ट । अक्रैषीत् । अक्रेष्ट । प्रीञ् १४७५ तर्पणे कान्तौ च । कान्तिः कामना । प्रीणाति । प्रीणीते । श्रीञ् १४७६ पाके । मीञ् १४७७ हिंसायाम् । 'हिनुमीना' (सू २५३०) । प्रमीणाति । प्रमीणीतः । 'मीनातिमिनोति–' (सू २५०८) इत्येज्विषये आत्त्वम् । ममौ । मिम्यतुः । ममिथ–ममाथ । मिम्ये । माता । मास्यति । मीयात् । मासीष्ट । अमासीत् । अमासिष्टाम् । अमास्त । षिञ् १४७८ बन्धने । सिनाति । सिनीते । सिषाय । सिष्ये । सेता । स्कुञ् १४७९ आप्रवणे ।

---

अथ श्नाविकरणधातवो निरूप्यन्ते । **डु क्रीञिति** ॥ **क्र्यादिभ्यः श्ना** ॥ कर्त्रर्थे सार्वधातुके परे क्र्यादिभ्यः श्नाप्रत्ययः स्यात् । स्वार्थे इत्यर्थः । शपोऽपवादः । **क्रीणातीति** ॥ श्नाप्रत्ययस्य अपित्सार्वधातुकत्वेन ङित्त्वादीकारस्य न गुण इति भावः । **ई हल्यघोरिति** ॥ हलादौ क्ङिति सार्वधातुके ईत्वमिति भावः । क्री णा झि इति स्थिते 'ई हल्यघो' इति ईत्वमाशङ्क्य आह । **ईत्वात्पूर्वमिति । नित्यत्वादिति** ॥ अकृते कृते च ईत्वे अन्तादेशस्य प्रवृत्तेरिति भावः । **एवं झस्येति** ॥ क्री णा झ इति स्थिते 'आत्मनेपदेष्वनतः' इत्यदादेशोऽपि ईत्वात्पूर्वमित्यर्थः । **ततः इति** ॥ अन्तादेशाददादेशाच्च पश्चादित्यर्थः । अजादौ क्ङिति सार्वधातुके श्नाप्रत्ययस्य आल्लोपः । भारद्वाजनियमात्थलि वेडिति मत्वा आह । **चिक्रयिथ–चिक्रेथेति । चिक्रियिवेति** ॥ क्रादिनियमादिडिति भावः । क्रीणातु । क्रीणीहि । अक्रीणात् । अक्रीणीत । क्रीणीयात् ।

## २५५५ । स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च । (३-१-८२)

चात् श्ना । स्कुनोति । स्कुनुते । स्कुनाति । स्कुनीते । चुस्काव । चुस्कुवे । स्कोता । अस्कौषीत् । अस्कोष्ट । 'स्तन्भ्वादयश्चत्वारः सौत्राः'। सर्वे रोधनार्था इत्येके । माधवस्तु प्रथमतृतीयौ स्तम्भार्थौ । द्वितीयो निष्कोषणार्थश्चतुर्थो धारणार्थ इत्याह । सर्वे परस्मैपदिनः । नलोपः । विष्टभ्नोति—विष्टभ्नाति । अवष्टभ्नोति—अवष्टभ्नाति । अवतष्टम्भ । 'जॄस्तन्भु—' (सू २२९१) इत्यङ् वा । व्यष्टभत् । व्यष्टम्भीत् । स्तुभ्नोति । स्तुभ्नाति ।

## २५५६ । वेः स्कभ्नातेर्नित्यम् । (८-३-७७)

वेः परस्य स्कभ्नातेः सस्य षः स्यात् । विष्कभ्नोति—विष्कभ्नाति । स्कुभ्नोति । स्कुभ्नाति ।

## २५५७ । हलः श्नः शानज्झौ । (३-१-८३)

हलः परस्य श्नः शानजादेशः स्याद्धौ परे । स्तभान । स्तुभान । स्कभान । स्कुभान । पक्षे 'स्तभ्नुहि' इत्यादि । युञ् १४८० बन्धने । युनाति । युनीते । योता । क्नूञ् १४८१ शब्दे । क्नूनाति । क्नूनीते । क्नविता । द्रूञ् १४८२ हिंसायाम् । द्रूणाति । द्रूणीते । पूञ् १४८३ पवने ।

## २५५८ । प्वादीनां ह्रस्वः । (७-३-८०)

शिति परे । पुनाति । पुनीते । पविता । लूञ् १४८४ छेदने । लुनाति । लुनीते । स्तॄञ् १४८५ आच्छादने । स्तृणाति । स्तृणीते । तस्तार । तस्तरतुः । स्तरिता—स्तरीता । स्तृणीयात् । स्तृणीत । आशिषि स्तीर्यात् । 'लिङ्सिचोः—'

---

क्रीणीत । **सौत्राः इति** ॥ नोपधा इत्यपि ज्ञेयम् । **नलोपः इति** ॥ 'अनिदिताम्' इत्यनेनेति भावः । **विष्टभ्नोतीति** ॥ 'स्तन्भेः' इति षत्वम् । **अवष्टभ्नोतीति** ॥ 'अवाच्चालम्बनाविदूर्ययोः' इति षत्वम् । **अवतष्टम्भेति** ॥ 'स्थादिष्वभ्यासेन' इति षत्वम् । **व्यष्टभदिति** ॥ 'प्राक्सितात्' इति षत्वम् । **स्तभानेति** ॥ श्नाप्रत्ययस्य शानजादेशे कृते 'अतो हेः' इति लुक् । **प्वादीनां ह्रस्वः** ॥ 'ष्ठिवुक्लम्वाचमाम्' इत्यतश्शितीत्यनुवर्तत इत्यभिप्रेत्य शेषम्पूरयति । **शिति परे इति । पवितेति** ॥ ऊकारान्तत्वान् सेडिति भाव । स्तॄञ् आच्छादने । सेट् । **तस्तरतुरिति** ॥ कित्त्वेऽपि 'ऋच्छत्यॄताम्' इति गुणः । **स्तरिता—स्तरीतेति** ॥ 'वृतो वा' इति दीर्घविकल्पः । **आशिषि स्तीर्यादिति** ॥ 'ॠत इद्धातोः' इति इत्त्वे रपरत्वे 'हलि च' इति दीर्घः । स्तॄ षीष्ट इति स्थिते आह । **लिङ्सिचोरिति वेडिति** ॥ 'वृतो वा' इति दीर्घविकल्पनिषेधसूत्र

अचचहत्। 'चप' इत्येके। चपयति। रह १६२८ त्यागे इत्येके। अरीरहत्। कथादेस्तु अररहत्। बल १६२९ प्राणने। बलयति। चिञ् १६३० चयने।

## २५६९। चिस्फुरोर्णौ। (६-१-५४)।

आत्त्वं वा स्यात्।

## २५७०। अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ। (७-३-३६)।

एषां पुक् स्याण्णौ। चपयति–चययति। ञित्करणसामर्थ्यादस्य णिज्विकल्पः। चयते। प्रणिचययति–प्रनिचययति। नान्ये मितोऽहेतौ (ग सू १९८)। **अहेतौ स्वार्थे णिचि ज्ञपादिभ्योऽन्ये मितो न स्युः। तेन शमादीनाममन्तत्वप्रयुक्तं**

---

त्यादौ अल्लोपस्य स्थानिवत्त्वाद्वृद्ध्यभावे च मित्त्वाद्ध्रस्वे च न विशेष। तथापि अदन्तात् चडि णौ अल्लोपे सति अग्लोपितया सन्वत्त्वदीर्घयोरभावे अचचहदिति रूपमस्ति फलमित्यर्थः। **चप इत्येके इति**॥ 'चह परिकल्पने' इत्यस्य स्थाने 'चप' इत्येके पठन्तीत्यर्थ.। 'रह त्यागे' इत्येके इत्यपि तथैव व्याख्येयम्। एवञ्च ज्ञपादिषु पञ्चसु चहधातुः चपधातुः रहधातुर्वा अन्यतमस्तृतीय., बलधातुश्चतुर्थ, चिञ्धातुः पञ्चमः, इति कृत्वा ज्ञपादिपञ्चाना मत-त्रयेऽपि पञ्चत्वात् ज्ञपादिपञ्चकत्वस्य न विरोध। 'रह त्यागे' इत्यस्यापि कथादिपाठफलमाह। **कथादेस्तु अररहदिति**॥ अदन्तत्वेन अग्लोपित्वान्न दीर्घसन्वत्त्वे इति भावः। 'बल प्राणने च' इत्यनुवृत्त्या मित्त्वस्यानुकर्षणाद्ध्रस्व मत्वा आह। **बलयतीति**॥ **चिस्फुरोर्णौ**॥ 'आदेच उपदेशे' इत्यत. आदिति 'विभाषा लीयतेः' इत्यतः विभाषेति चानुवर्तते इति मत्वा शेष पूरयति। **आत्त्वं वा स्यादिति**॥ चिञो णिचि आत्त्वे चा इ इति स्थिते। **अर्तिह्री**॥ अर्ति ह्री व्ली री क्नूयी क्ष्मायी आत् एषान्द्वन्द्वात् षष्ठी। पुक् णौ इति छेदः। तदाह। **एषां पुक् स्याण्णौ इति**॥ पुकि ककार इत्, उकार उच्चारणार्थः कित्त्वादन्ताव-यवः। चाप् इ इति स्थिते चेत्यनुवर्त्य मित्त्वस्यानुकर्षणेन मित्त्वाद्ध्रस्वे चपि इत्यस्मात्तिबादौ परिनिष्ठितमाह। **चपयतीति**॥ आत्त्वाभावपक्षे त्वाह। **चययतीति**॥ चेर्णिचि वृद्धौ आयादेशे मित्त्वादुपधाह्रस्व इति भाव.। ननु चिञ्धातोरिह ञित्करण व्यर्थम्। ण्यन्तात् णिचश्चेत्येव उभयपदसिद्धेः। चौरादिकस्यास्य नित्य ण्यन्तत्वेन चयति चयते इति केवलस्या-ण्यन्तस्य शशशृङ्गायमाणत्वादित्यत आह। **ञित्करणसामर्थ्यादि[illegible]**॥ एवञ्च णिजभाव-पक्षे उभयपदार्थमिह ञित्करणमर्थवदिति भाव। 'शेषे विभाषाकखादौ' इति णत्वविकल्प मत्मा आह। **प्रणिचयति-प्रनिचयति इति**॥ 'नान्ये मितोऽहेतौ' इति चुरादिगण-सूत्रम्। अहेताविति च्छेद। 'हेतुमति च' इति सूत्रेण विहितो णिच् हेतुशब्देन विवक्षितः। स न भवतीत्यहेतुः स्वार्थणिच्। तस्मिन्परे इति लभ्यते। किमपेक्षया अन्ये इत्याकांक्षायां इत प्राक्पठितज्ञपादिचिञन्तेभ्य इति लभ्यते। तदाह। **अहेतौ स्वार्थे णिचीत्यादिना**॥

मित्त्वं न। घट्ट १६३१ चलने। मुस्त १६३२ सङ्घाते। खट्ट १६३३ संवरणे। षट्ट १६३४ स्फिट्ट १६३५ चुबि १६३६ हिंसायाम्। पुल १६३७ सङ्घाते। 'पूर्ण' इत्येके। 'पुण' इत्यन्ये। पुंस १६३८ अभिवर्धने। टकि १६३९ बन्धने। टङ्कयति—टङ्कते। धूस १६४० कान्तिकरणे। धूसयति। दन्त्यान्तः। 'मूर्धन्यान्तः' इत्येके। 'तालव्यान्तः' इत्यपरे। कीट १६४१ वर्णे। चूर्ण १६४२ सङ्कोचने। पूज १६४३ पूजायाम्। अर्क १६४४ स्तवने। 'तपने' इत्येके। शुठ १६४५ आलस्ये। शुठि १६४६ शोषणे। शुण्ठयति—शुण्ठति। जुड १६४७ प्रेरणे गज १६४८ मार्ज १६४९ शब्दार्थौ। गाजयति। मार्जयति। मर्च १६५० च। मर्चयति। घृ १६५१ प्रस्रवणे। 'स्रावणे' इत्येके। पचि १६५२ विस्तारवचने। पञ्चयति। 'पञ्चते' इति व्यक्तार्थस्य शपि गतम्। तिज १६५३ निशाने। तेजयति। कृत १६५४ संशब्दने।

## १५७१। उपधायाश्च। (७-१-१०१)

धातोरुपधाभूतस्य ॠत इत्स्यात्। रपरत्वम्। 'उपधायां च' (२२६५) इति दीर्घः। कीर्तयति। 'उॠत्' (२५६७)। अचीकृतत्—अचिकीर्तत्। वर्ध १६५५ छेदनपूरणयोः। कुबि १६५६ आच्छादने। कुम्बयति। 'कुभि' इत्येके। लुबि १६५७ तुबि १६५८ अदर्शने। 'अर्दने' इत्येके। ह्लप १६५९ व्यक्तायां वाचि। 'क्लप' इत्येके। चुटि १६६० छेदने। इल १६६१ प्रेरणे। एलयति। ऐलिलत्। म्रक्ष १६६२ म्लेच्छने। म्लेच्छ १६६३ अव्यक्तायां वाचि। ब्रूस १६६४ बर्ह १६६५ हिंसायाम्। केचिदिह गर्ज गर्द शब्दे गर्ध अभिकाङ्क्षायां इति पठन्ति। गुर्द १६६६ पूर्वनिकेतने। जसि १६६७

---

अहेताविंत्यस्य व्याख्यान स्वार्थे णिचीति। **तेनेति**॥ ज्ञपादिञ्चिञन्तव्यतिरिक्तचुरादीनां मित्त्वनिषेधो नेत्यर्थः। **शमादीनामिति**॥ 'शम आलोचने'। 'अम रोगे' इत्यादीनामग्रे चुरादौ पठिष्यमाणानामित्यर्थ.। **अमन्तत्वेति**॥ जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इत्यमन्तत्वनिमित्तकमित्यर्थः। कृत संशब्दने। **उपधायाश्च**॥ 'ॠत इद्धातोः' इत्यनुवर्तते। तदाह। **धातोरित्यादिना**॥ चङि 'उर् ॠत्' इत्युपधाया ॠत्त्वपक्षे आह। **अचीकृतदिति**॥ उपधाया ॠत्त्वे कृत् इत्यस्य द्वित्वे उरदत्त्वे लघुपरतया सन्वत्त्वादित्त्वे 'दीर्घो लघोः' इति दीर्घ इति भावः। ॠत्त्वाभावपक्षे आह। **अचिकीर्तदिति**॥ ॠत इत्त्वे रपरत्वे 'उपधा-

रक्षणे। 'मोक्षणे' इति केचित्। जंसयति—जंसति। ईड १६६८ स्तुतौ। जसु १६६९ हिंसायाम्। पिडि १६७० सङ्घाते। रुष १६७१ रोषे। 'रुट' इत्येके। डिप १६७२ क्षेपे। ष्टुप १६७३ समुच्छ्राये।

आ कुस्मादात्मनेपदिनः। 'कुस्मनाम्नो वा' इति वक्ष्यते। तमभिव्याप्येत्यर्थः। अकर्तृगामिफलार्थमिदम्। चित १६७४ सञ्चेतने। चेतयते। अचीचितत। दशि १६७५ दंशने। दंशयते। अददंशत। इदित्त्वाण्णिजभावे दंशति। आकुस्मीयमात्मनेपदं णिच्सन्नियोगेनैवेति व्याख्यातारः। नलोपे सञ्जिसाहचर्याद्भ्वादेरेव ग्रहणम्। दसि १६७६ दर्शनदंशनयोः। दंसयते—दंसति। 'दस' इत्यप्येके। डप १६७७ डिप १६७८ सङ्घाते। तत्रि १६७९ कुटुम्बधारणे। तन्त्रयते। चान्द्रा धातुद्वयमिति मत्वा 'कुटुम्बयते' इत्युदाहरन्ति। मत्रि १६८० गुप्तपरिभाषणे। स्पश १६८१ ग्रहणसंश्लेषणयोः। तर्ज १६८२ भर्त्स १६८३ तर्जने। बस्त १६८४ गन्ध १६८५ अर्दने। बस्तयते। गन्धयते। विष्क १६८६ हिंसायाम्। 'हिष्क' इत्येके। निष्क १६८७ परिमाणे। लल १६८८ ईप्सायाम्। कूण १६८९ सङ्कोचे। तूण १६९० पूरणे। भ्रूण १६९१ आशाविशङ्कयोः। शठ १६९२ श्लाघायाम। यक्ष १६९३ पूजायाम्। स्यम १६९४ वितर्के। गूर १६९५ उद्यमने। शम १६९६ लक्ष १६९७ आलोचने। 'नान्ये मितः—' इति मित्त्वनिषेधः। शामयते। कुत्स १६९८ अवक्षेपणे। त्रुट १६९९ छेदने। 'कुट' इत्येके। गल १७०० स्रवणे। भल १७०१ आभण्डने। कूट १७०२ आप्रदाने। 'अवसादने' इत्येके। कुट्ट १७०३ प्रतापने। वञ्चु १७०४ प्रलम्भने। वृष १७०५ शक्तिबन्धने। शक्तिबन्धनं प्रजननसामर्थ्यं, शक्ति-

---

याश्च' इति दीर्घे कीर्त् इत्यस्य द्वित्वे हलादिशेषे अभ्यासह्रस्वे कुत्वे इति भावः। लघुपरकत्वाभावेन सन्वद्भावविषयत्वाभावान्नाभ्यासदीर्घः। आकुस्मादित्यत आङभिविधाविति मत्वा आह। **तमभिव्याप्येति**॥ ननु 'णिचश्च' इति सिद्धे आत्मनेपदविधानं व्यर्थमित्यत आह। **अकर्तृगामीति**॥ ननु 'दशि दशने' णिजभावे दशति इति कथम्। आकुस्मीयत्वेन णिजभावेऽपि तङो दुर्वारत्वादित्यत आह। **आकुस्मीयमिति**॥ 'दशसञ्जस्वञ्जां शपि' इति नलोपमाशङ्क्य आह। **नलोपे सञ्जीति**॥ **स्पश ग्रहणेति**॥ अपस्पशत 'अत्स्मृदृत्वर' इति अभ्यासस्य अत्त्व इत्त्वापवादः। गूर उद्यमने। अयन्दीर्घोपधः। गूरयते। तुदादौ तु 'गुरी उद्यमने' इति ह्रस्वोपधः। दीर्घादौ तु 'घूरी, गुरी हिंसागत्योः' इति दीर्घोपध एवेति

सम्बन्धश्च । वर्षयते । मद १७०६ तृप्तियोगे । मादयते । दिवु १७०७ परि-कूजने । गॄ १७०८ विज्ञाने । गारयते । विद १७०९ चेतनाख्यानविवासेषु । वेदयते ।

सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे ।
विन्दते विन्दति प्राप्तौ श्यन्लुक्श्नम्शेष्विदं क्रमात् ॥

मान १७१० स्तम्भे । मानयते । यु १७११ जुगुप्सायाम् । यावयते । कुस्म १७१२ नाम्नो वा (ग सू १९९) 'कुस्म' इति धातुः कुत्सितस्मयने वर्तते । कुस्मयते । अचुकुस्मत । अथवा 'कुस्म' इति प्रातिपदिकम् । ततो धात्वर्थे णिच् । इत्याकुस्मीयाः ।

चर्च १७१३ अद्ध्ययने । बुक्क १७१४ भाषणे । शब्द १७१५ उपसर्गादाविष्कारे च । चाद्भाषणे । प्रतिशब्दयति । प्रतिश्रुतमाविष्करोतीत्यर्थः । 'अनुपसर्गाच्च' । 'आविष्कारे' इत्येव । शब्दयति । कण १७१६ निमीलने । काणयति । 'णौ चङ्युपधाया ह्रस्वः' (सू १३२४) । 'काण्यादीनां वा'

---

केचित् । ह्रस्वोपध इत्यन्ये । विदधातोरर्थभेदे विकरणभेद सङ्गृह्णाति । **सत्तायां विद्यते इत्यादिश्लोकेन** ॥ 'कुस्म नाम्नो वा' गणसूत्रम् । कुस्मेति पृथक्पद अविभक्तिकम् । तदाह । **कुस्म इति धातुरिति** ॥ कुत्सितस्मयने वर्तते इति शेषपूरण, व्याख्यानादिति भाव. । **कुस्मयते इति** ॥ आकुस्मीयत्वादकर्तृगेऽपि फले आत्मनेपदम् । आकुस्मादात्मनेपदिन इत्यत्र आङाभिविधावित्याश्रयणादिति भाव । **अचुकुस्मतेति** ॥ उकारस्य गुरुतया अभ्यासस्य लघुपरकत्वाभावान्न सन्वत्त्वमिति भाव । नाम्नो वेत्यश व्याचष्टे । **अथवेति** ॥ नाम प्रातिपदिक तस्माद्वा णिज्भवतीत्यर्थ· । तच्च प्रातिपदिकङ्कुस्मशब्दात्मकमेव गृह्यते प्रत्यासत्त्या । तथाच कुस्मेति धातो· कुस्मेति प्रातिपदिकाद्वा णिजिति फलितम् । तत्र धातोः णिचः स्वार्थिकत्वमभिप्रेत्य प्रातिपदिकात् णिचि विशेषमाह । **ततः इति** ॥ तस्मात् प्रातिपदिकादित्यर्थ. । **धात्वर्थे इति** ॥ करोतीत्यर्थे आचष्टे इत्यर्थे वेत्यर्थः । नच 'तत्करोति तदाचष्टे' इत्येव प्रातिपादिकात् णिच् सिद्ध इति वाच्यम् । 'आकुस्मादात्मनेपदिन.' इत्यात्मनेपदनियमार्थत्वात् । इत्याकुस्मीयाः । **शब्द उपसर्गादिति** ॥ उपसर्गात्पर. शब्दधातु· आविष्कारे वर्तते इत्यर्थः । **अनुपसर्गाच्चेति** ॥ अनुपसर्गात्परोऽपि शब्दधातु णिच लभते इत्यर्थः । आविष्कारे इत्यस्यैवानुवृत्त्यर्थं पृथगुक्तिः । शब्द आविष्कारे चेत्येतावत्येवोक्ते अनुपसर्गाद्भाषणेऽपि स्यात् । तदाह । **आविष्कारे इत्येवेति । काण्यादीनामिति** ॥ इद वार्तिक 'भ्राजभासभाष' इति सूत्रे भाष्ये

(वा ४६१३) इति विकल्प्यते । अचीकणत्—अचकाणत् । जभि १७१७ नाशने । जम्भयति—जम्भति । षूद १७१८ क्षरणे । सूदयति । असूषुदत् । जसु १७१९ ताडने । जासयति—जसति । पश १७२० बन्धने । पाशयति । अम १७२१ रोगे । आमयति । 'नान्ये मितः—' इति निषेधः । 'अम' गत्यादौ शपि गतः । तस्माद्धेतुमण्णौ 'न कम्यमिचमाम्' इति निषेधः । आमयति । चट १७२२ स्फुट १७२३ भेदने । विकासे शशपोः 'स्फुटति—स्फोटते' इत्युक्तम् । घट १७२४ सङ्घाते । घाटयति । 'हन्त्यर्थाश्च' (ग सू २००) नवगण्यामुक्ता अपि हन्त्यर्थाः स्वार्थे णिचं लभन्ते इत्यर्थः । दिवु १७२५ मर्दने । उदित्त्वाद्देवतीत्यपि । अर्ज १७२६ प्रतियत्ने । अयमर्थान्तरेऽपि । द्रव्यमर्जयति । घुषिर् १७२७ विशब्दने । घोषयति । 'घुषिरविशब्दने' । (सू ३०६३) इति सूत्रे 'अविशब्दने' इति निषेधाल्लिङ्गादनित्योऽस्य णिच् । घोषति । इरित्त्वादङ्वा । अघुषत्—अघोषीत् । ण्यन्तस्य तु अजू-

---

पठितम् । 'काणि राणि श्राणि भाणि हेठि लोपय. षट् काण्यादय' इति भाष्यम् । **अचीकणदिति** ॥ ह्रस्वत्वपक्षे लघुपरत्वादभ्यासस्य सन्वत्त्वमिति भावः । **शशपोरिति** ॥ शविकरणे शब्विकरणे चेत्यर्थ । **हन्त्यर्थाश्चेति** ॥ गणसूत्रमिद । हन हिसागत्योरिति हनधातोर्हिंसा गमनञ्चार्थः । एतदर्थका: ये धातव भ्वादिषु नवसु गणेषु पठिता· ते सर्वेऽपि चुरादौ पठिताः प्रत्येतव्या इत्यथः । ततश्च तेभ्यः स्वार्थे णिजपि पक्षे भवतीति फलितम् । तदाह । **नवगण्यामित्यादि** ॥ 'दिवु मर्दने' । **उदित्त्वादिति** ॥ उदित्करणम् 'उदितो वा' इति क्त्वाया-

इड्विकल्पार्थम् । द्यूत्वा—देवित्वा । इडभावे ऊठ् । इटि तु 'नक्त्वा सेट्' इति कित्त्वनिषेधात् गुण इति स्थितिः । अस्य नित्यण्यन्तत्वे सति णिचा व्यवहितत्वेन क्त्वायामिड्विकल्पस्य अप्रसक्तेरुदित्करण व्यर्थ सत् ज्ञापयति अस्य दिवुधातो· णिज्विकल्प इतीति भावः । 'घुषिर् विशब्दने' । विशब्दन शब्देन स्वाभिप्रायाविष्करण प्रतिज्ञानञ्च । भ्वादौ त्वय धातुरविशब्दनार्थक· पठित· । **घोषयतीति** ॥ शब्देन स्वाभिप्रायमाविष्करोतीत्यर्थः । प्रतिजानीते इति वा । **लिङ्गादिति** ॥ इण्निषेधप्रकरणे 'घुषिर् अविशब्दने' इति सूत्रम् । अविशब्दनार्थकात् घुषधातोर्निष्ठाया इण्नस्यादित्यर्थः । यथा—घुष्टा रज्जु· । प्रसारितेत्यर्थः । अविशब्दने इति किम् । अवघुषित वाक्यम् । प्रतिज्ञातमित्यर्थ· । अत्र विशब्दनार्थकत्वान्नेण्निषेधः इति स्थितिः । तत्र विशब्दनार्थकस्य घुषधातोः चौरादिकत्वेन ण्यन्तत्वनियमाण्णिचा व्यवधानात्ततः परा निष्ठा नास्त्येवेति इण्निषेधे विशब्दनपर्युदासो व्यर्थस्सन् चौरादिकस्यास्य विशब्दनार्थकस्य घुषः णिचि विकल्पङ्गमयति । एवञ्च अवघुष्ट वाक्यमित्यत्र चौरादिकघुषेर्विशब्दनार्थकस्य निष्ठायाम् इति इण्निषेधो निर्बाधः इति भाष्ये स्पष्टम् । **इरित्त्वादङ् वेति** ॥ णिजभावपक्षे इति शेष. । ननु इरित्त्वादेव णिज्विकल्पे सिद्धे 'घुषिरविशब्दने' इति इण्निषेधसूत्रे अविशब्दने

घुषत् । आङः क्रन्द १७२८ सातत्ये । भौवादिकः क्रन्दधातुराह्वानाद्यर्थ उक्तः । स एवाङ्पूर्वो णिचं लभते सातत्ये । आक्रन्दयति । अन्ये तु 'आङ्पूर्वो घुषिः क्रन्दसातत्ये' इत्याहुः । आघोषयति । लस १७२९ शिल्पयोगे । तसि १७३० भूष १७३१ अलङ्करणे । अवतंसयति–अवतंसति । भूषयति । अर्ह १७३२ पूजायाम् । ज्ञा १७३३ नियोगे । आज्ञापयति । भज १७३४ विश्राणने । शृधु १७३५ प्रसहने । 'अशशर्धत्–अशीशृधत्' । यत १७३६ निकारोपस्कारयोः । रक १७३७ लग १७३८ आस्वादने । 'रघ' इत्येके । 'रग' इत्यन्ये । अञ्चु १७३९ विशेषणे । अञ्चयति । उदित्त्वमिड्विकल्पार्थम् । अत एव विभाषितो णिच् । अञ्चति । एवं शृधुजसुप्रभृतीनामपि बोध्यम् । लिगि १७४० चित्रीकरणे । लिङ्गयति–लिङ्गति । मुद १७४१ संसर्गे । मोदयति सक्तून्घृतेन । त्रस १७४२ धारणे । 'ग्रहणे' इत्येके । 'वारणे' इत्यन्ये । उध्रस १७४३ उञ्छे । उकारो धात्ववयव इत्येके । नेत्यन्ये । ध्रासयति । उध्रासयति । मुच १७४४ प्रमोचने, मोदने च । वस १७४५ स्नेहच्छेदापहरणेषु । चर १७४६ संशये । च्यु १७४७ सहने । 'हसने च' इत्येके । च्यावयति । 'च्युस' इत्येके । च्योसयति । भुवोऽवकल्कने १७४८ । अवकल्कनं मिश्रीकरणमित्येके । चिन्तनमित्यन्ये । भावयति । कृपेश्च १७४९ । कल्पयति ।

---

इति पर्युदासस्य णिज्विकल्पज्ञापकत्वाश्रयणक्लेशो भाष्ये व्यर्थ इति चेन्न । अत एव भाष्य रित्त्वाभावविज्ञानात् । एवञ्च 'घुषिरविशब्दने' इत्यत्र घुषिरित्यस्य इका निर्देशमाश्रित्य प्रथमान्तत्वमेवाश्रयणीयम् । इरित्त्वादङ्वेति मूलन्तु भाष्यविरोधादुपेक्ष्यमेवेत्यास्तान्तावत् । **आङः क्रन्द सातत्ये इति** ॥ आङः परः क्रन्दधातुः आह्वानसातत्येऽर्थे णिच लभते इत्यर्थः । यद्वा आङ इत्यनन्तर घुषिरित्यनुवर्तते । क्रन्दसातत्ये इत्यर्थनिर्देशः । तदाह । **अन्ये त्विति । लसशिल्पयोगे इति** ॥ कौशले इत्यर्थः । **तसि भूषेति** ॥ अत्र तसिः प्रायेण अवपूर्वः । तदाह । **अवतंसयतीति । ज्ञा नियोगे इति** ॥ आङ्पूर्वः । तदाह । **आज्ञापयतीति** ॥ आदन्तत्वात् पुक् । अजिज्ञपत् । **यत निकारेति** ॥ तालव्यान्तस्थादिः । यत्तो वा प्रैषो वा निकार । यातयति । अयीयतत् । **अञ्चु विशेषणे इति** व्यावर्तने इत्यर्थः । **उदित्त्वमिति** ॥ 'उदितो वा' इत्यण्यन्तात् क्त्वायामिड्विकल्पार्थमित्यर्थः । ण्यन्तात्तु णिचा व्यवधानात् इड्विकल्पस्य न प्रसक्तिरिति भावः । नन्वस्य नित्यण्यन्तत्वादण्यन्तत्व असिद्धमित्यत आह । **अत एवेति** ॥ **च्यु सहने इति** ॥ च्यावयति । अचुच्यवत् । **भुवोऽवकल्कने इति** । अवकल्कनवृत्तेर्भूधातोर्णिच् स्यादित्यर्थः । **कृपेश्चेति** ॥ अवकल्कनवृत्तेः कृपेः

'आ स्वदः सकर्मकात्' (ग सू २०१) । स्वदिमभिव्याप्य सम्भवत्कर्मभ्य एव णिच् । ग्रस १७५० ग्रहणे । ग्रासयति फलम् । पुष १७५१ धारणे पोषयत्याभरणम् । दल १७५२ विदारणे । दालयति । पट १७५३ पुट १७५४ लुट १७५५ तुजि १७५६ मिजि १७५७ पिजि १७५८ लुजि १७५९ भजि १७६० लघि १७६१ त्रसि १७६२ पिसि १७६३ कुसि १७६४ दशि १७६५ कुशि १७६६ घट १७६७ घटि १७६८ बृहि १७६९ बर्ह १७७० बल्ह १७७१ गुप १७७२ धूप १७७३ विच्छ १७७४ चीव १७७५ पुथ १७७६ लोकृ १७७७ लोचृ १७७८ णद १७७९ कुप १७८० तर्क १७८१ वृतु १७८२ वृधु १७८३ भाषार्थाः । पाटयति । पोटयति । लोटयति । तुञ्जयति । तुञ्जति । एवं परेषाम् । घाटयति । घण्टयति ।

## २५७२ । नाग्लोपिशास्वृदिताम् । (७-४-२)

णिच्यग्लोपिनः शास्तेः ऋदितां चोपधाया ह्रस्वो न स्याच्चङ्परे णौ । अलुलोकत् । अलुलोचत् । वर्तयति । वर्धयति । उदित्त्वात् वर्तति । वर्धति । रुट १७८४ लजि १७८५ अजि १७८६ दसि १७८७ भृशि १७८८ रुशि १७८९ शीक १७९० रुसि १७९१ नट १७९२ पुटि १७९३ जि १७९४ चि १७९५ रघि १७९६ लघि १७९७ अहि १७९८ रहि १७९९ महि १८०० च । लडि १८०१ तड १८०२ नल १८०३ च । पूरी १८०४ आप्यायने । ईदित्त्वं निष्ठायामिण्निषेधाय । अत एव णिज्वा । पूरयति—पूरति ।

---

णिच् स्यादित्यर्थः । **कलपयतीति** ॥ 'कृपो रो लः' इति लत्वम् । कृपेश्चेति पाठान्तरम् । **आस्वदस्सकर्मकादिति** ॥ आङभिविधौ । तदाह । **स्वदिमभिव्याप्येति** ॥ तत्र 'ष्वद आस्वादने' इत्यस्य अकर्मकत्वादाह । **सम्भवत्कर्मभ्यः इति** ॥ इत आरभ्य आस्वदीयास्सकर्मकाः । स्वदिस्त्वकर्मकः । **पट पुटेति** ॥ एकत्रिंशत् धातवः । आद्यास्त्रयष्टान्ताः । आद्यद्वितीयौ पवर्गप्रथमादी । चतुर्थाद्या एकादश इदितः । तिसिपिसी इदुपधौ । अदुपधौ इत्येके । षोडशसप्तदशाविदितौ । अलुलोकत्—अलुलोचत्, इत्यत्र उपधाह्रस्वे प्राप्ते । **नाग्लोपि** ॥ 'णौ चङ्युपधायाः' इत्यनुवर्तते । णावित्यावर्तते । एकमग्लोपिन इत्यत्रान्वेति । द्वितीयन्तु निषेधे परनिमित्तम् । तदाह । **णिच्यग्लोपिनः इत्यादि** ॥ ऋदित्त्वान्नाग्लोपीति निषेधेन उपधाह्रस्वाभावे सति लघुपरकत्वाभावान्नाभ्यासदीर्घ इति भावः । **उदित्त्वादिति** ॥ 'वृतु वृधु' इत्युदित्त्वं 'उदितो वा' इत्यण्यन्तात् क्त्वायामिड्विकल्पार्थम् । ण्यन्तात्तु णिचा व्यवधानात् नेड्विकल्पप्रसक्तिः । अतो णिज्विकल्पो विज्ञायते इति भावः । पूरी आप्यायने । **इण्निषे-**

रुज १८०५ हिंसायाम् । ष्वद १८०६ आस्वादने । 'स्वाद' इत्येके । असिष्वदत् । दीर्घस्य त्वषोपदेशत्वात् असिस्वदत् ।

'आ धृषाद्वा' (ग सू २०२)। इत ऊर्ध्वं विभाषितणिचो धृषधातुमभिव्याप्य । युज १८०७ पृच १८०८ संयमने । योजयति—योजति । अयौक्षीत् । पर्चयति—पर्चति । पर्चिता । अपर्चीत् । अर्च १८०९ पूजायाम् । षह १८१० मर्षणे । साहयति 'स एवायं नागः सहति कलभेभ्यः परिभवम्' ईर १८११ क्षेपे । ली १८१२ द्रवीकरणे । लाययति--लयति । लेता । वृजी १८१३ वर्जने । वर्जयति--वर्जति । वृञ् १८१४ आवरणे । वारयति—वरति--वरते । वरिता—वरीता । जॄ १८१५ वयोहानौ । जारयति—जरति । जरिता जरीता । ज्रि १८१६ च । ज्राययति—ज्रयति । ज्रेता । रिच १८१७ वियोजनसम्पर्चनयोः । रेचयति—रेचति । रेक्ता । शिष १८१८ असर्वोपयोगे । शेषयति—शेषति । शेष्टा । अशिक्षत् । अयं विपूर्वोऽतिशये । तप १८१९ दाहे । तापयति—तपति । तप्ता । तृप १८२० तृप्तौ । 'सन्दीपने' इत्येके ।

---

**धायेति** ॥ अण्यन्तात् क्त्वायामिण्निषेधार्थमीदित्त्वम् । ण्यन्तात्तु णिचा व्यवधानादप्रसक्ते । अतो णिज्विकल्पो विज्ञायते इत्यर्थः । स्वदधातुः षोपदेशः । तदाह । **असिष्वददिति** ॥ आदेशसकारत्वात्षः । अभ्यासेकारस्य सयोगपरकत्वेन गुरुत्वान्नाभ्यासदीर्घः । **दीर्घस्य त्विति** ॥ दीर्घमध्यस्य त्वित्यर्थः । **अषोपदेशत्वादिति** ॥ ह्रस्वमध्यस्यैव स्वदेः षोपदेशेषु परिगणनादिति भावः । इत्यास्वदीयाः । **आधृषाद्वेति** ॥ गणसूत्रम् । **विभाषितणिचः इति** ॥ विकल्पितणिच्काः प्रत्येतव्या इत्यर्थ. । आङभिव्याप्ताविति मत्वा आह । **धृषधातुमभिव्याप्येति** ॥ णिजभावपक्षे आह । **अयौक्षीदिति । अर्च पूजायामिति** ॥ अयमनुदात्तेदिति शाकटायनः । अर्चयते । अर्चते । अस्य भ्वादौ पाठः अनार्षः । अनेनैव सिद्धेः । नच परस्मैपदार्थं भ्वादावर्चेः पाठ इति वाच्यम् । भ्वादौ तस्याप्यात्मनेपदीयताया्श्शाकटायनसम्मतत्वेन माधवोक्ते । एवमत्रत्यानामार्षीयाणां भ्वादौ परस्मैपदिषु पाठः प्रामादिक एवेत्याहुः । ली द्रवीकरणे । **लाययतीति** ॥ लीलोरिति नुक् तु न । लासाहचर्यात् हेतुमण्णावेवास्य प्रवृत्तेः । **लेतेति** ॥ विभाषा लीयतेः इत्यात्त्वन्तु न । तत्र श्नाश्यन्विकरणयोरेव यका निर्देश इति भाष्यात् । वृञ् आवरणे । **वरिता—वरीतेति** ॥ 'वृतो वा' इति दीर्घः । आशीर्लिङि व्रियात् । आत्मनेपदे तु 'लिङ्सिचोः' इति वेट् । वृषीष्ट—वरिषीष्ट । इडभावपक्षे उश्चेति कित्त्वान्न गुणः । 'न लिङि' इति इटो न दीर्घः । अवृत । **ज्रि चेति** ॥ ह्रस्वान्तोऽयम् । **रिच वियोजने इति** ॥ अनिडयम् । ततश्च णिजभावपक्षे नेट् । तदाह । **रेक्तेति । शिष असर्वेति** ॥ अयमप्यनिट् । तदाह । **शेष्टेति । अशिक्षदिति** ॥ शल इगुपधादिति क्सः । **अयं विपूर्वो अतिशये इति** ॥ वर्तत इति शेषः । अयमस्माद्विशिष्ट इत्यत्र अधिक इति गम्यते । **तृप तृप्ताविति** ॥ अनिट्सु

तर्पयति—तर्पति। तर्पिता। छृदी १८२१ संदीपने। छर्दयति—छर्दति। छर्दिता। छर्दिष्यति। 'सेऽसिचि—' (सू २५०३) इति विकल्पो न। साहचर्यात्तत्र रौधादिकस्यैव ग्रहणात्। 'चृप छृप दृप सन्दीपने' इत्येके। चर्पयति। छर्पयति। दृभी १८२२ भये। दर्भयति। दर्भति। दर्भिता। दृभ १८२३ संदर्भे। अयं तुदादावीदित्। श्रथ १८२४ मोक्षणे। 'हिंसायां' इत्येके। मी १८२५ गतौ। माययति—मयति। मेता। ग्रन्थ १८२६ बन्धने। ग्रन्थयति—ग्रन्थति। शीक १८२७ आमर्षणे। चीक १८२८ च। अर्द १८२९ हिंसायाम। स्वरितेत्। अर्दयति—अर्दति—अर्दते। हिंसि १८३० हिंसायाम्। हिंसयति—हिंसति। 'हिनस्ति' इति श्नमि गतम्। अर्ह १८३१ पूजायाम्। आङः षद १८३२ पद्यर्थे। आसादयति—आसीदति। 'पाघ्रा—' (सू २३३०) इति सीदादेशः। आसत्ता। आसात्सीत्। शुन्ध १८३३ शौचकर्मणि। शुन्धिता। अशुन्धीत्। अशुन्धिष्टाम्। छद १८३४ अपवारणे। स्वरितेत्। जुष १८३५ परितर्कणे। परितर्कणमूहो हिंसा वा। 'परितर्पणे' इत्यन्ये। परितर्पणं परितृप्तिक्रिया। जोषयति—जोषति। प्रीतिसेवनयोर्जुषत इति तुदादौ। धूञ् १८३६ कम्पने। णावित्यधिकृत्य 'धूञ्प्रीञोर्नुग्वक्तव्यः' (वा ४५१९)। धूनयति—धवति—धवते। केचित्तु 'धूञ्प्रीणोः—' इति पठित्वा प्रीणातिसाहचर्याद्धुनोतेरेव नुकमाहुः। धावयति। अयं स्वादौ क्र्यादौ तुदादौ च, स्वादौ ह्रस्वश्च। तथा च कविरहस्ये—

'धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम्।
वायुर्विधूनयति चम्पकपुष्परेणून्यत्कानने धवति चन्दनमञ्जरीश्च॥'

प्रीञ् १८३७ तर्पणे। प्रीणयति। 'धूञ्प्रीणोः—' इति हरदत्तोक्तपाठे तु प्राययति—प्रयति—प्रयते। श्रन्थ १८३८ ग्रन्थ १८३९ सन्दर्भे। आप्लृ १८४० लम्भने। आपयति—आपति। आपत्। आप्ता। स्वरितेदयमित्येके। आपते। तनु १८४१ श्रद्धोपकरणयोः 'उपसर्गाच्च दैर्घ्ये'। तानयति—वितानयति—तनति—

---

श्यना निर्देशादयं सेट्। तदाह। **तर्पितेति। छृदी सन्दीपने इति**॥ ईदित्त्वन्निष्ठायामिण्निषेधार्थम्। **धुवति स्फुटितेति**॥ शविकरणस्य रूपम्। शस्य ङित्त्वाद्गुणाभावे उवङ्। प्रीञ् तर्पणे। **प्रीणयतीति**॥ 'धूञ्प्रीञोः' इति वार्तिकान्नुगिति भाव.। **हरदत्तेति**॥ अनेन भाष्यासम्मतत्वं सूचितम्। **उपसर्गाच्चेति**॥ दैर्घ्ये तु उपसर्गादनुपसर्गाच्च परस्तनु-

वितनति । 'चन श्रद्धोपहननयोः' इत्येके । चानयति--चनति । वद १८४२ सन्देशवचने । वादयति । स्वरितेत् । वदति--वदते । अनुदात्तेदित्येके । ववदतुः । ववदिथ । ववदे । वद्यात् । वच १८४३ परिभाषणे । वाचयति--वचति । वक्ता । अवाक्षीत् । मान १८४४ पूजायाम् । मानयति--मानति । मानिता । विचारणे तु भौवादिको नित्यसन्नन्तः । स्तम्भे तु 'मानयते' (इत्याकुस्मीयाः ।) 'मन्यते' इति दिवादौ । 'मनुते' इति तनादौ च । भू १८४५ प्राप्तावात्मनेपदी । भावयते--भवते । णिच्सन्नियोगेनैवात्मनेपदमित्येके । भवति । गर्ह १८४६ विनिन्दने । मार्ग १८४७ अन्वेषणे । कठि १८४८ शोके । उत्पूर्वोऽयमुत्कण्ठायाम् । 'कण्ठते इत्यात्मनेपदी गतः । मृजू १८४९ शौचालङ्कारयोः । मार्जयति--मार्जति । मार्जिता--मार्ष्टा । मृष १८५० तितिक्षायाम् । स्वरितेत् । मर्षयति--मर्षति--मर्षते । मृष्यति--मृष्यते इति दिवादौ । सेचने शपि मर्षति । धृष १८५१ प्रसहने । धर्षयति--धर्षति । इत्याधृषीयाः ।

अथादन्ताः । कथ १८५२ वाक्यप्रबन्धे । अल्लोपस्य स्थानिवद्भावान्न वृद्धिः । कथयति । अग्लोपित्वान्न दीर्घसन्वद्भावौ । अचकथत् । वर १८५३ ईप्सायाम् । वरयति । वारयतीति गतम् । गण १८५४ सङ्ख्याने । गणयति ।

---

धातुराधृषीयो वेदितव्य इत्यर्थः । श्रद्धोपकरणयोस्त्वनुपसर्गादेवेति भावः । 'वच परिभाषणे' । **अवाक्षीदिति** ॥ अस्यतिवक्तीति लुका निर्देशादङ् नेति भावः । वचिस्वपीति सम्प्रसारणम् । उच्यात् । इत्याधृषीयाः । **अथादन्ता इति** ॥ वक्ष्यन्ते इति शेषः । अन्ते अकारो नेत्संज्ञकः नाप्युच्चारणार्थ इति भावः । तत्र कथधातोर्णिचि अतो लोपे कथि इत्यस्मात् तिपि शपि गुणे अयादेशे कथयतीति रूपं वक्ष्यति । तत्र णिचमाश्रित्य उपधावृद्धिमाशङ्कयाह । **अल्लोपस्य स्थानिवद्भावादिति** ॥ अचः परस्मिन्नित्यनेनेति भावः । अत्रेदमवधेयम् । स्थानिनि सति शास्त्रीयं यत्कार्यं तदेव स्थानिवदादेशोऽनल्विधावित्यत्रातिदिश्यते । यत्तु स्थानिनि सति निमित्तव्याघातान्न भवति तस्य भावस्य अशास्त्रीयत्वान्नातिदेशः । अन्यथा नायक इत्यत्र ईकारस्थानिकस्य ऐकारस्य आयादेशानापत्तेः । ईकारे स्थानिनि सति आयभावस्य दृष्टत्वेन तस्याप्यैकारे अतिदेशप्रसङ्गात् । 'अचः परस्मिन्' इत्यत्र तु स्थानिनि सति यत् शास्त्रीयङ्कार्यं प्रसज्यते तस्य तदभावस्य चाशास्त्रीयस्याप्यतिदेश इति भाष्ये स्पष्टम् । अतोऽत्र धकारादकारे सति प्रसक्तस्य उपधावृद्ध्यभावस्य अशास्त्रीयत्वेऽप्यातिदेश इति सिद्धम् । लुङि चङि अचकथत् इत्यत्र सन्वत्त्वमाशङ्क्याह । **अग्लोपित्वादिति** ॥ सन्वत्त्वविषये जायमानोऽभ्यासदीर्घः सन्वत्त्वन्नापेक्षत इति पृथगुक्तिः । एवङ्कथादौ सर्वत्र ज्ञेयम् । गण सङ्ख्याने । चङि अल्लोपस्य स्थानि-

## २५७३ । ई च गणः । (७-४-९७)

गणेरभ्यासस्य ईत्स्याच्चङ्परे णौ । चादत् । अजगणत्--अजीगणत् । शठ १८५५ श्वठ १८५६ सम्यगवभाषणे । पट १८५७ वट १८५८ ग्रन्थे । रह १८५९ त्यागे । अररहत् । स्तन १८६० गदी १८६१ देवशब्दे । स्तनयति । गदयति । अजगदत् । पत १८६२ गतौ वा । वा णिजन्तः । वा अदन्त इत्येके । आद्ये पतयति--पतति । पताञ्चकार । अपतीत् । द्वितीये पातयति । अपीपतत् । पष १८६३ अनुपसर्गात् । गतावित्येव । पषयति । स्वर १८६४ आक्षेपे । स्वरयति । रच १८६५ प्रतियत्ने । रचयति । कल १८६६ गतौ संख्याने च । चह १८६७ परिकल्कने । परिकल्कनं दम्भः शाठ्यं च । मह १८६८ पूजायाम् । महयति । महति इति शपि गतम् । सार १८६९ कृप १८७० श्रथ १८७१ दौर्बल्ये । सारयति । कृपयति । श्रथयति । स्पृह १८७२ ईप्सायाम् । भाम १८७३ क्रोधे । अबभामत् । सूच १८७४ पैशुन्ये । सूचयति । अषोपदेशत्वान्न षः । असूसुचत् । खेट १८७५ भक्षणे । तृतीयान्त इत्येके । 'खोट' इत्यन्ये । क्षोट १८७६ क्षेपे । गोम १८७७ उपलेपने । अजुगोमत् । कुमार १८७८ क्रीडायाम् । अचुकुमारत् । शील १८७९ उपधारणे ।

---

वत्त्वात् दीर्घसन्वद्भावयोरभावे अजगणदित्येव प्राप्ते आह । **ई च गणः** ॥ 'सन्वल्लघुनि' इत्यतश्चङ्परे इति, अत्र लोप इत्यतः अभ्यासस्येति, चानुवर्तते । तदाह । **गणेरभ्यासस्येति** ॥ 'अत्स्मृदृत्वर' इति पूर्वसूत्रादद्ग्रहणञ्चकारादनुकृष्यते । तदाह । **चाददिति । स्तनगदीदेवशब्दे इति** ॥ पर्जन्यगर्जने इत्यर्थः । स्तनश्च गदिश्चेति द्वन्द्वः । गदीति इका निर्देशः । गदेत्यकारान्तात् इकि अल्लोपे गदीति निर्देश । एवञ्च प्राकरणिकमदन्तत्वन्नव्याहन्यते । **पत गतौ वेति** ॥ गतावर्थे पतधातुः णिच वा लभत इत्यर्थः । तदाह । **वा णिजन्त इति** ॥ आधृषीयत्वाभावात् विकल्पविधिः । यद्वा वाशब्दस्य अदन्तत्व एवान्वय । णिच् तु नित्य एव । तदाह । **वा अदन्त इत्येके इति** ॥ प्रथमपक्षे तु अदन्तत्वमेव । तदाह । **आद्ये पतयतीति** ॥ अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः । **पताञ्चकारेति** ॥ णिजभावेऽप्यदन्तत्वात् कास्यनेकाच् इत्यामिति भावः । चडि अपपतत् । अग्लोपित्वान्न दीर्घसन्वत्त्वे । **द्वितीये पातयतीति** ॥ तकारादकारस्य उच्चारणार्थत्वादुपधावृद्धिरिति भावः । **अपीपतदिति** ॥ अग्लोपित्वाभावाद्दीर्घसन्वत्त्वे इति भावः । **कृपयतीति** ॥ अजन्तत्वस्य धात्वन्तरत्वात् 'कृपो रो लः' इति न भवति । 'स्पृह ईप्सायाम् ।' आप्तुमिच्छा ईप्सा । **अबभामदिति** ॥ चडि अल्लोपस्य स्थानिवत्त्वान्नोपधाह्रस्वः । सूच पैशुन्ये । **अषोपदेशत्वादिति** ॥ अनेकाच्त्वादिति भावः । खेट भक्षणे । **तृतीयान्त इति** ॥ टवर्गतृतीयान्त इत्यर्थः । साम सान्त्वप्रयोगे । सान्त्वप्रयोगः अकटुभाषणम् ।

उपधारणमभ्यासः । साम १८८० सान्त्वप्रयोगे । अससामत् । 'साम सान्त्वने' इत्यतीतस्य तु असीषमत् । वेल १८८१ कालोपदेशे । वेलयति । 'काल' इति पृथग्धातुरित्येके । कालयति । पल्पूल १८८२ लवनपवनयोः । वात १८८३ सुखसेवनयोः । 'गतिसुखसेवनेषु' इत्येके । वातयति । अववातत् । गवेष १८८४ मार्गणे । अजगवेषत् । वास १८८५ उपसेवायाम् । निवास १८८६ 'आच्छादने' । अनिनिवासत् । भाज १८८७ पृथक्कर्मणि । सभाज १८८८ प्रीतिदर्शनयोः । प्रीतिसेवनयोः' इत्यन्ये । सभाजयति । ऊन १८८९ परिहाणे । ऊनयति । 'ओः पुयण्ज—' (सू २५७७) इति सूत्रे 'पययोः' इति वक्तव्ये वर्गप्रत्याहारजकारग्रहो लिङ्गं 'णिचि अच आदेशो न

---

**अससामदिति** ॥ अल्लोपस्य स्थानिवत्त्वान्नोपधाह्रस्व । ननु साम सान्त्वने इति कथादे. प्राक् चुरादौ पाठो व्यर्थः अनेनैव सिद्ध' इत्यत आह । **साम सान्त्वने इत्यतीतस्य तु असीषमदिति** ॥ पूर्वपठिते सामधातौ मकारादकारस्य उच्चारणार्थतया च उपधाह्रस्व. दीर्घसन्वत्त्वे चेत्यर्थः । यद्यपि साम सान्त्वप्रयोगे इत्येव प्राक् चुरादौ पठितम् । तथापि सान्त्वनस्य सामप्रयोगादनन्यत्वात्तथोक्तिरिति भावः । गवेष मार्गणे । मार्गण अन्वेषणम् । चङि अल्लोपस्य स्थानिवत्त्वान्नोपधाह्रस्व । तदाह । **अजगवेषदिति** ॥ 'निवास आच्छादने' । अनिनिवासत् । 'ऊन परिहाणे' परिहाणन्न्यूनीभावः । **ऊनयतीति** ॥ णावतो लोप इति भाव. । ननु लुङि चङि ऊन इ अत् इ इति स्थिते णिलोपे 'चङि' इत्यजादेर्द्वितीयस्य नशब्दस्य द्वित्वे अतो लोपे अग्लोपित्वेन सन्वत्त्वाभावादभ्यासे इत्त्वदीर्घयोरभावे आटो वृद्धौ औननदिति रूप वक्ष्यति । तदनुपपन्नम् । द्वित्वात प्रागेव परत्वादतो लोपे कृते निशब्दस्य द्वित्त्वे औनिनादित्येवमभ्यासे इकारश्रवणप्रसङ्गात् । नच द्वित्वे कार्ये अतो लोपस्य द्विर्वचनेऽचीति निषेधः शङ्क्यः । अल्लोपनिमित्तस्य णिचो द्वित्वनिमित्तत्वाभावात् इत्यत आह । **ओः पुयण्जीत्यादि** ॥ ओःपुयण्ज्यपरे इति सूत्रे ओः पययोरपरयोरित्येव वक्तव्ये पु इति पवर्गस्य यणिति प्रत्याहारस्य जकारस्य च ग्रहण लिङ्गमित्यन्वय । कुत्र लिङ्गमित्यत आह । **णिचीत्यादि** ॥ द्वित्वे कार्ये णिज्निमित्तकः अच आदेशो न स्यादित्यत्र लिङ्गमिति पूर्वेणान्वयः । तथाहि । ओ पुयण् ज्यपर इति सूत्रम् । सनि परे यदङ्गन्तदवयवाभ्यासोवर्णस्य इकारस्स्यात् अवर्णपरकेषु पवर्गयण्जकारेषु परत इति तदर्थः । पूङ् पिपावयिषति । भू बिभावयिषति । यु यियावयिषति । रु रिरावयिषति । लूञ् लिलावयिषति । जु जिजावयिषति । इत्युदाहरणानि । अत्र द्वित्वम्प्रत्यनिमित्ते णिचि 'द्विर्वचनेऽचि' इति निषेधाप्रवृत्त्या द्वित्वात् प्रागेव परत्वाद्वृद्ध्यावादेशयोः कृतयोः अभ्यासेष्वाकारस्य ह्रस्वे सति 'सन्यतः' इत्येव इत्वसिद्धेः पवर्गयण्प्रत्याहारजकारग्रहणं व्यर्थम् । ओः पययोरपरयोः इत्येव सूत्रमस्तु । पकारयकारग्रहणन्तु न व्यर्थम् । पिपावयिषति यियावयिषतीत्यत्र उक्तरीत्या 'सन्यतः' इति इत्वसिद्धावपि पिपविषते यियविषतीत्यत्र पूङ्धातोर्युधातोश्च अण्यन्तात् 'सनि अभ्यासे' इत्त्वार्थं तदावश्यकत्वात् । तत्र हि

र्थम् । मुण्डयति माणवकम् । मिश्रयत्यन्नम् । श्लक्ष्णयति वस्त्रम् । लवणयति व्यञ्जनमिति । हलिकल्योरदन्तत्वार्थम् । सत्यस्यापुगर्थम् । केषांचित्तु प्रपञ्चार्थम् । सत्यं करोत्याचष्टे वा सत्यापयति । 'अर्थवेदयोरप्यापुग्वक्तव्यः' (वा १७५८) । अर्थापयति । वेदापयति । पाशं विमुञ्चति विपाशयति । रूपं पश्यति रूपयति । वीणयोपगायत्युपवीणयति । तूलेनानुकुष्णात्यनुतूलयति । तृणाग्रं तूलेनानुघट्टयतीत्यर्थः । श्लोकैरुपस्तौति उपश्लोकयति । सेनयाभियाति अभिषेणयति । 'उपसर्गात्सुनोति—' (सू २२७०) इति षः । अभ्यषेणयत् । 'प्राक्सितात्—' (सू २२७६) इति षः । अभिषिषेणयिषति । 'स्थादिष्वभ्यासेन च—' (२२७७) इति षः । लोमान्यनुमार्ष्टि अनुलोमयति । 'त्वच संवरणे' घः । त्वचं गृह्णाति त्वचयति । चर्मणा संनह्यति सञ्चर्मयति । वर्णं गृह्णाति वर्णयति । चूर्णैरवध्वंसते अवचूर्णयति । इष्ठवदित्यतिदेशात्पुंवद्भावादयः । एनीमाचष्टे एतयति । दरदमाचष्टे दारदयति ।

---

मुण्डङ्करोतीत्यर्थे मुण्डशब्दस्य माणवकसापेक्षत्वेऽपि णिजिति भाव । यदा तु प्रकरणादिना माणवकत्वादिविशेषण ज्ञाप्यते तदैव मुण्डयतीति णिजिति भावः । 'सुप आत्मनः' इति सूत्रभाष्ये तु मुण्डय माणवकमित्यत्र गमकत्वाण्णिच् । महान्त पुत्रमिच्छतीत्यादौ तु अगमकत्वात् न क्यजित्युक्तम् । तदा प्रपञ्चार्थमेव मुण्डादिग्रहणमिति शब्देन्दुशेखरे स्थितम् । **श्लक्ष्णयति वस्त्रमिति** ॥ निर्मल करोतीत्यर्थः । **लवणयति व्यञ्जनमिति** ॥ लवणयुक्त करोतीत्यर्थः । **हलिकल्योरिति** ॥ एवञ्च ताभ्या सापेक्षाभ्यां न णिच् । तद्ग्रहणस्य अदन्तत्वनिपातने चरितार्थत्वादिति भावः । ननु सत्यशब्दात् तत्करोति इत्यादिनैव णिच्सिद्धे. 'सत्याप' इति सूत्रे सत्यग्रहण व्यर्थमित्यत आह । **सत्यस्यापुगर्थमिति** । **केषाञ्चिदिति** ॥ पाशादीनामित्यर्थः । **सत्यापयतीति** ॥ आपुग्विधिसामर्थ्यान्न टिलोपः । पाश विमुञ्चतीत्यादौ 'प्रातिपदिकाद्धात्वर्थे' इति णिच् । **अभिषिषेणयिषतीति** ॥ अभिषेणि इति ण्यन्तात्सनि रूपम् । ननु त्वचङ्गृह्णाति त्वचयतीति कथन् । त्वच्छब्दाच्चकारान्ताण्णिचि टिलोपे त्वचयतीत्यापत्तेरित्यत आह । **त्वचेति** ॥ 'त्वच सवरणे' इत्यस्मात् 'पुंसि संज्ञायां घः प्रायेण' इति घप्रत्यय इत्यर्थः । **पुंवद्भावादयः इति** ॥ आदिना रभावटिलोपादिग्रहणम् । **एतयतीति** ॥ 'भस्याढे' इति पुवत्त्वस्य इष्ठनि प्रवृत्तेः णावपि तस्यातिदेशात् 'वर्णादनुदात्तात्' इति स्त्रीप्रत्ययस्य तत्सन्नियोगशिष्टनत्वस्य च निवृत्तौ एतशब्दे तकारादकारस्य टिलोप इति भावः । नन्वेनीशब्दाण्णौ टिलोपेन स्त्रीप्रत्ययनिवृत्तौ तत्सान्नियोगशिष्टनत्वस्यापि निवृत्तौ एतयतीति सिद्ध्यतीत्यस्वरसत्वात् पुंवद्भावे उदाहरणान्तरमाह । **दरदमिति** ॥ दरदिति कश्चिद्राजा, तस्यापत्य दारदः 'द्व्यञ्मगध' इत्यण् । स्त्र्यपत्ये तु दरदोऽपत्य स्त्री दरत् 'अतश्च' इत्यणो लुक् । तामाचष्टे इत्यर्थे दरच्छब्दाण्णौ इष्ठव-

पृथुं प्रथयति । वृद्धौ सत्यां पूर्वं वा टिलोपः । अपिप्रथत्—अपप्रथत् । मृदुं म्रदयति । अमम्रदत् । भृशं कृशं दृढं भ्रशयति क्रशयति द्रढयति । अबभ्रशत् अचक्रशत् अदद्रढत् । परिव्रढयति । पर्यबव्रढत् । ऊढिमाख्यत् । औजिढत् । ढत्वादीनामसिद्धत्वात् हृतिशब्दस्य द्वित्वम् । 'पूर्वत्रासिद्धीयमद्वित्वे' इति त्वनित्यमित्युक्तम् । 'ढिशब्दस्य' द्वित्वमित्यन्ये । औजिढत्—औडिढत् । ऊढमाख्यत् । औजढत्—औडढत् । 'ओः पुयण्—' (सू २५७७) इति वर्गप्रत्याहारजग्रहो लिङ्गं 'द्वित्वे कार्ये णावच आदेशो न' इति ऊनयता-

त्त्वात् पुवत्त्वेन स्त्रियामित्यनुवृत्तौ 'अतश्च' इति स्त्रियां विहितस्य अण्प्रत्ययलुको निवृत्तौ दारदशब्दे टेर्लोपे दारदयतीति रूप सिद्ध्यति । पुवद्भावे तु दरद्शब्दस्य टिलोपे सति दरयतीति स्यादिति भाव । टिलोपस्य अजादेशत्वेन स्थानिवत्त्वान्नोपधावृद्धि । 'पृथुं मृदु भृशञ्चैव कृशञ्च दृढमेव च । परिपूर्वं बृढञ्चैव षडेतान्रविधो स्मरेत् ॥' इति क्रमेणोदाहरति । **पृथुमिति** ॥ आचष्टे इति शेष. । प्रथयति । तत्र प्रक्रियां दर्शयति । **वृद्धौ सत्यामिति** ॥ पृथु इ इति स्थिते परत्वाद्वृद्धौ कृताया टिलोप । अथवा कृतायामकृतायाञ्च वृद्धौ प्रवृत्त्या नित्यत्वाद्वृद्धेः प्राक् टिलोपः । उभयथापि 'र ऋत' इति रभावे प्रथयतीति रूपमिति भावः । वस्तुतस्तु अकृताया वृद्धौ उकारस्य लोप.। कृतायान्तु औकारस्य लोप.। तथा च "शब्दान्तरस्य प्राप्नुवन विधिरनित्य." इति टिलोप. अनित्य' । ततश्च परत्वात् टिलोपात् प्राग्वृद्धिरेवेति 'मुण्डमिश्र' इति सूत्रे भाष्ये स्थितम् । वृद्धौ सत्यां पूर्वं वा टिलोप इति मूलन्तु कृताकृतप्रसङ्गित्वाट्टिलोपस्य नित्यत्वमभिप्रेत्येति बोध्यम् । **अपिप्रथदिति** ॥ वृद्धौ सत्या टिलोपे अग्लोपित्वाभावात् सन्वत्त्वे 'सन्यत' इति इत्त्वे 'दीर्घो लघो.' इति दीर्घ इति भावः । **अपप्रथदिति** ॥ वृद्धेः पूर्व टिलोपेन उकारस्य निवृत्तावग्लोपित्वात् सन्वत्त्वाभाव रूपम् । अबभ्रशदित्यादौ वृद्धेः पूर्व टिलोपे अग्लोपित्वान्न सन्वत्त्वमिति भावः । वृद्धौ सत्यां टिलोपे तु अबिभ्रशदित्याद्यूह्यम् । **औजिढदिति** ॥ ऊहधातोः क्तिनि ढत्वधत्वष्टुत्वढलोपेषु ऊढि तस्मात् णौ टिलोपे ऊढि इति ण्यन्ताल्लुडि चडि आटि वृद्धौ औढि अ त् इति स्थिते प्रक्रियां दर्शयति । **ढत्वादीनामिति** ॥ ढत्वधत्वष्टुत्वढलोपानामसिद्धत्वात् 'अजादेर्द्वितीयस्य' इति हृति शब्दस्य द्वित्वमित्यर्थ । **इत्युक्तमिति** ॥ लुग्विकरणप्रक्रियाया ऊर्णुञ्धाताविति शेषः । एवञ्च हृतिशब्दस्य द्वित्वे हलादिशेषे 'कुहोश्चुः' इति हस्य चुत्वमिति भाव. । **ढिशब्दस्येति** ॥ 'पूर्वत्रासिद्धीयमद्वित्वे' इत्यस्य क्वचिदनित्यत्वेऽप्यत्र तदप्रवृत्तौ मानाभावादिति भाव' । **ऊढमाख्यदिति** ॥ ऊहधातोः क्तप्रत्यये ढत्वधत्वष्टुत्वढलोपेषु ऊढशब्दात् ण्यन्ताल्लुडि चडि ढत्वादीनामसिद्धत्वात् हृतेत्यस्य द्वित्वे हलादिशेषे अभ्यासस्य चुत्वे रूपम् । **औडढदिति** ॥ 'पूर्वत्रासिद्धीयमद्वित्वे' इति ढत्वादीनामासिद्धत्वाभावपक्षे ढशब्दस्य द्वित्वे रूपम् । नन्विह परत्वात् टिलोपे सति णिच्सहितस्य हृतीति ढीत्यस्य वा द्वित्वे कृते अभ्यासे इकार एव श्रूयेत नत्वकार इत्यत आह । **ओः पुयणित्यादि** ॥ स्वशब्दाण्णिचि टिलोपमाशङ्क्य आह ।

वुक्तम् । 'प्रकृत्यैकाच्' (सू २०१०) । वृद्धिपुकौ । स्वापयति । त्वां मां वा आचष्टे त्वापयति मापयति । मपर्यन्तस्य त्वमौ । पररूपात्पूर्वं नित्यत्वाट्टिलोपः वृद्धिपुकौ । त्वादयति मादयति इति तु न्याय्यम् । अन्तरङ्गत्वात्पररूपे कृते 'प्रकृत्यैकाच्' (सू २०१०) इति प्रकृतिभावात् । न च प्रकृतिभावो भाष्ये प्रत्याख्यात इति भ्रमितव्यम् । भाष्यस्य प्रेष्ठाद्युदाहरणविशेषेऽन्यथासिद्धिपरत्वात् । युवामावां वा युष्मयति अस्मयति । श्वानमाचष्टे शावयति ।

---

**प्रकृत्यैकाजिति** ॥ प्रकृतिभावाट्टिलोपाभावे अकारस्य वृद्धौ आकारे पुगागमः । तदाह । **वृद्धिपुकाविति** ॥ त्वापयति मापयति इत्यत्र प्रक्रिया दर्शयति । **मपर्यन्तस्येति** ॥ युष्मदस्मद्भ्या णौ 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य त्वमौ । त्व अद् इ, म अद् इ इति स्थिते आह । **पररूपादिति** ॥ कृते अकृते च पररूपे टिलोपस्य प्रवृत्तेर्नित्यत्वम्बोध्यम् । त्व इ म इ इति स्थिते आह । **वृद्धिरिति** ॥ अकारस्य आकार । टिलोपस्य स्थानिवत्त्वन्तु न शङ्क्यम् । अजादेशत्वाभावात् । **पुगिति** ॥ 'अर्ति' इत्यनेनेति भाव । तदेवम्प्राचीनमतमुपन्यस्य स्वमतमाह । **त्वादयतीत्यादिना** ॥ तदेवोपपादयति । **अन्तरङ्गत्वादिति** ॥ त्व अद् इ, म अद् इ इति स्थिते नित्यमपि टिलोपम्बाधित्वा अन्तरङ्गत्वात्पररूपे कृते 'प्रकृत्यैकाच्' इति प्रकृतिभावे टिलोपस्याप्रवृत्तौ उपधावृद्धिरिति भाव । ननु 'इष्ठेमेयस्सु' किमुदाहरणमिति प्रश्ने प्रेयान् प्रेमा प्रेष्ठः इत्युदाहरणानि प्रदर्श्य नैतदस्ति प्रयोजन 'प्रस्थस्फ' इति विहितप्रादीनामाभीयत्वेनासिद्धतया तस्य टिलोपाप्रसक्तेरित्युक्त्वा श्रेयान् श्रेष्ठः इत्यत्र 'प्रशस्यस्य श्रः' इति श्रादेशस्य पाञ्चमिकतया आभीयत्वाभावेनासिद्धत्वाभावात् टिलोपे अप्राप्ते प्रकृतिभावविधिरित्युदाहरणान्तर प्रदर्श्य श्रादेशे अकारोच्चारणसामर्थ्याट्टिलोपो न भविष्यतीत्युक्त्वा स्रग्वितमः स्रजिष्ठः इत्यत्र 'विन्मतोर्लुक्' इति लुङ्निवृत्त्यर्थं प्रकृतिभावविधानमित्युक्त्वा प्राप्त एव टिलोपे आरभ्यमाणस्य लुकस्तदपवादतया लुका टिलोपस्य बाधो भविष्यतीति 'प्रकृत्यैकाच्' इत्यस्य भाष्ये प्रत्याख्यातत्वात् 'त्वादयति, मादयति' इत्यत्र प्रकृतिभावोपन्यासो न युज्यते इत्याशङ्क्य निराकरोति । **न च प्रकृतिभावो भाष्ये प्रत्याख्यात इति भ्रमितव्यमिति** ॥ कुत इत्यत आह । **भाष्यस्येति** ॥ उदाहृतभाष्यस्य हि प्रेयान् प्रेष्ठ इत्यादीना प्रकृतिभाव विनाऽपि साधने तात्पर्य, न तु प्रकृतिभावप्रत्याख्यानमभिमतम् । स्वमाचष्टे स्वापयतीत्यादौ तदावश्यकत्वात् । अत एव 'प्रकृत्यैकाच्' 'इष्ठेमेयस्सु' चेन्नैकाच उच्चारणसामर्थ्यादवचनात् प्रकृतिभाव इति वार्तिकव्याख्यावसरे 'अन्तरेणापि वचन प्रकृतिभावो भविष्यति' इति भाष्ये उक्तम् । अन्यथा अन्तरेणैव वचनामित्युच्येत इत्यास्तान्तावत् । 'प्रत्ययोत्तरपदयोश्च' इत्यत्र एकवचने इत्यनुवृत्तम् । तच्च यौगिकमाश्रीयते । एकत्वविशिष्टवाचिनोर्युष्मदस्मदोरिति लभ्यते इति मत्वा आह । **युवामावां वेति** ॥ न च द्वयोरुक्तौ युवावादेशौ शङ्क्यौ विभक्तेर्लुका लुप्तत्वात् । न च लुकः प्रागेव युवावौ किन्न स्यातामिति वाच्यम् । 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' इत्युक्तेरिति भावः । **शावयतीति** ॥ श्वानमाचष्टे इत्यर्थः । श्वन्शब्दाण्णौ

'नस्तद्धिते' (सू ६७९) इति टिलोपः। प्रकृतिभावस्तु न, येन नाप्राप्तिन्यायेन 'टेः' (सू १७८६) इत्यस्यैव बाधको हि सः। भत्वात्सम्प्रसारणम्। अन्ये तु 'नस्तद्धिते' (सू ६७९) इति नेहातिदिश्यते। इष्ठनि तस्यादृष्टत्वात्। ब्रह्मिष्ठ इत्यादौ परत्वात् 'टेः' (सू १७८६) इत्यस्यैव प्रवृत्तेः। तेन शुनयतीति रूपमाहुः। विद्वांसमाचष्टे विद्वयति। अङ्गवृत्तपरिभाषया सम्प्रसारणं नेत्येके। सम्प्रसारणे वृद्धावावादेशे च विदावयतीत्यन्ये। नित्यत्वाट्टिलोपात्प्राक्सम्प्रसारणम्। अन्तरङ्गत्वात्पूर्वरूपं टिलोपः। विदयतीत्यपरे।

---

श्वन् इ इति स्थिते आह। **नस्तद्धिते इति**॥ 'प्रकृत्यैकाच्' इति प्रकृतिभावमाशङ्क्य आह। **प्रकृतिभावस्तु नेति**॥ कुत इत्यत आह। **येनेति**॥ 'टेः' इति टिलोपे प्राप्ते सत्येव प्रकृत्यैकाजित्यारभ्यते। 'नस्तद्धिते' इत्यस्य स्रजिष्ठः इत्यादौ अप्राप्तोऽपि प्रकृतिभाव. आरभ्यते इति भावः। **भत्वादिति**॥ इष्ठवत्त्वेन भत्वात् 'श्वयुव' इति सम्प्रसारणमित्यर्थ। तथा च श्वन् इ इति स्थिते टिलोपे सति तस्याभीयत्वेनासिद्धत्वादन्नन्तत्वात् वस्य सम्प्रसारणे पूर्वरूपे उकारस्य वृद्धौ आवादेशः। **अन्ये त्विति**॥ इष्ठनि दृष्टस्यैव इष्ठवदित्यतिदेश। टेरित्येव टिलोप इष्ठनि दृष्ट, न तु 'नस्तद्धिते' इति अतो नास्यातिदेश इत्यर्थ.। नन्वतिशयेन ब्रह्मा ब्रह्मिष्ठ इत्यत्र नस्तद्धिते इति टिलोपो दृष्ट इत्यत आह। **ब्रह्मिष्ठ इत्यादाविति**॥ **तेनेति**॥ 'नस्तद्धिते' इत्यस्याप्रवर्तनेनेत्यर्थ। ततश्च प्रकृतिभावात् 'टे·' इति लोपस्याभावे सम्प्रसारणे शुनयतीति रूपमित्यर्थः। आहुरित्यस्वरसोद्भावनम्। तद्बीजन्तु ब्रह्मवच्छब्दादिष्ठनि टेरिति टिलोपापवादे 'विन्मतोर्लुक्' इति मतुपो लुकि 'नस्तद्धिते' इति टिलोपो दृष्ट एव। ततश्च इष्ठनि तस्यादृष्टत्वादित्ययुक्तम्। किञ्च ब्रहिष्ठ इत्यादौ परत्वाट्टेरित्यस्य प्रवृत्तिरित्ययुक्तम्। केवलस्य ब्रह्मन्शब्दस्य वेदादिवचनस्य गुणवचनत्वाभावेन इष्ठनो दुर्लभत्वात् 'अजादेर्गुणवचनादेव' इत्युक्ते·। मत्वन्तादिष्ठनि तु मतोर्लुकि तेन 'टे.' इत्यस्य प्रवृत्तिबाधेन लुगुत्तरन्तदप्रवृत्त्या परत्वादित्यप्यसङ्गतिरिति शब्देन्दुशेखरे स्थितम्। **विद्वयतीति**॥ विद्वस्शब्दाण्णौ टिलोप.। ननु इष्ठवत्त्वात् भत्वे वसोस्सम्प्रसारणमित्याशङ्क्य आह। **अङ्गवृत्तेति**॥ 'अङ्गवृत्त पुनर्वृत्तावविधि.' इति परिभाषयेत्यर्थः। 'अङ्गकार्ये कृते पुनर्नाङ्गकार्यम्' इति तदर्थः। वस्तुतस्तु विद्वयतीत्यत्र 'टे·' इत्यसोर्लोपे वस्वन्तत्वाभावात् सम्प्रसारणाप्रसक्तेरङ्गवृत्तपरिभाषोपन्यासो वृथेत्यस्वरस सूचयति। **इत्येके इति**। **सम्प्रसारणे इति**॥ विद्वस्शब्दाण्णौ इष्ठवत्त्वेन टिलोपे कृते वकारस्य सम्प्रसारणे पूर्वरूपे उकारस्य वृद्धौ आवादेशे विदावयतीत्यन्ये मन्यन्ते इत्यर्थः। अत्रापि पूर्ववदेवास्वरसः टिलोपे सति वस्वन्तत्वाभावात्। **नित्यत्वादिति**॥ टिलोपे कृते अकृते च प्रवृत्ते· सम्प्रसारण नित्यम्। टिलोपस्तु कृते सम्प्रसारणे पूर्वरूपे च कृते उसो भवति। अकृते तु अस् इत्यनित्यः। "शब्दान्तरस्य प्राप्नुवन्विधिरनित्यः" इति न्यायादिति भावः। ननु कृतेऽपि सम्प्रसारणे पररूपात्प्राक् अस एव टिलोप इति तस्य नित्यत्वमित्यत आह। **अन्तरङ्गत्वात्पूर्वरूपं टिलोपः इति**॥ सम्प्रसारणे पूर्वरूपे कृते

उदञ्चमाचष्टे उदीचयति। उदैचिचत्। प्रत्यञ्चं प्रतीचयति। प्रत्यचिचत्। 'इकोऽसवर्णे—' (सू ९१) इति प्रकृतिभावपक्षे, प्रतिअचिचत्। सम्यञ्चमाचष्टे समीचयति। सम्यचिचत्—समिअचिचत्। तिर्यञ्चमाचष्टे तिराययति। अञ्चेष्टिलोपेनापहारेऽपि बहिरङ्गत्वेनासिद्धत्वात्तिरसस्तिरिः। 'असिद्धवदत्र—' (सू २१८३) इति चिणो लुङ्न्यायेन प्रथमटिलोपोऽसिद्धः। अतः पुनष्टिलोपो

उसो लोपेऽपि वस्वन्तत्वस्य विनक्ष्यत्वान्न सम्प्रसारणमित्यस्वरस सूचयति। **इत्यपरे इति** ॥ एवञ्च विद्वयतीति प्रथमपक्ष एव स्थितः। तत्राङ्गवृत्तपरिभाषोपन्यास एव वृथेति स्थितम्। **उदीचयतीति** ॥ उत्पूर्वकाद्दत्विगित्यादिना क्विनि 'अनिदिताम्' इति नलोपे उदचशब्द.। तस्माण्णौ इष्ठवत्त्वेन भत्वादच इत्यकारलोप बाधित्वा 'उद ईत्' इति ईत्त्वे उदीचि इति ण्यन्ताल्लडादय इति भावः। **उदैचिचदिति** ॥ लुङि 'द्विर्वचनेऽचि' इति णिलोपनिषेध न चिशब्दस्य द्वित्वम् 'उपसर्गसमानाकारम्पूर्वपद धातुसञ्ज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते' इत्युक्तेरुदः उपर्याडिति भाव.। एवञ्च उद. पृथक्करणेन 'प्रकृत्यैकाच्' इति प्रकृतिभावान्न टिलोप'। **प्रतीचयतीति** ॥ अच इत्यल्लोपे 'चौ' इति पूर्वस्य दीर्घः। इह अच इत्यल्लोपे चिशब्दात्प्रागटि तकारादिकारस्य यण्। अच इत्यकारलोपस्याभीयत्वेऽपि असमानाश्रयत्वान्नासिद्धत्वम्। लोपस्य णिनिमित्तत्वात्। आटस्तु लुङ्निमित्तत्वात्। **इकोऽसवर्णे इतीति** ॥ 'न समासे' इति तु न। पृथक्करणेन समासनिवृत्ते'। **समीचयतीति** ॥ 'समस्समिः' इति सम्यादेशः। अच इति लोपे चाविति दीर्घ.। **सम्यचिचदिति** ॥ सम्यादेशस्य स्थानिवत्त्वेनोपसर्गत्वात् पृथक्करणम्। पृथक्करणेन उत्तरपदपरत्वाभावेऽप्यन्तरङ्गत्वाज्जातस्सम्यादेशो न निवर्तते। **तिराययतीति** ॥ तिरस् इत्यव्ययम्। तत्पूर्वात् अञ्चेः क्विनि नलोपे तिरस् अच् इत्यस्माण्णौ टिलोपेन धातोर्निवृत्तौ तिरसास्तिर्यलोपे इति तिरिभावे इकारस्य वृद्धावायादेशे तिरायि इत्यस्मात् ण्यन्ताल्लडादीति भावः। न च तिरसः पृथक्करणे सति धातो' 'प्रकृत्यैकाच्' इति प्रकृतिभावात् कथ टिलोप इति वाच्यम्। तिरसित्यस्य कदाप्यनुपसर्गतया उपसर्गसमानाकारत्वाभावेन पृथक्करणाभावात्। नन्वेव सति अञ्चतेष्टिलोपेनापहारे सति अञ्चतिपरकत्वविरहात्कथमिह तिरसस्तिरिभाव इत्यत आह। **अञ्चेष्टिलोपेनेति**। **बहिरङ्गत्वेनेति** ॥ बहिर्भूतणिनिमित्तकत्वादिति भावः। नन्वस्तु तिरसस्तिरिः। तत्र रेफादिकारस्य टेरिति लोपः स्यादित्यत आह। **असिद्धवदत्रेति** ॥ प्रथमटिलोपोऽसिद्ध इत्यन्वय। तिरस् अच् इ इति स्थिते प्रथमप्रवृत्तः अच् इत्येवरूपटेर्लोप. तिरेष्टिलोपे कर्तव्ये आभीयत्वादसिद्ध इत्यर्थः। ननु प्रथमटिलोपस्य कथन्तिरेष्टिलोपे कर्तव्ये असिद्धत्वम्। टिलोपशास्त्रस्य एकत्वादित्यत आह। **चिणो लुङ्न्यायेनेति** ॥ पचधातोर्भावकर्मणोर्लुङस्तङि प्रथमपुरुषैकवचने तशब्दे परे 'चिण् भावकर्मणो' इति च्लेश्चिणि उपधावृद्धौ अटि अपाचि त इत्यस्मात् 'तिङश्च' इति तरपि तदन्तात् 'किमेत्तिङव्ययघादाम्' इत्याम्प्रत्यये अपाचिततरामिति स्थिते 'चिणो लुक्' इति प्रथमस्य तशब्दस्य लुकि कृते पुनस्तरप्प्रत्ययतशब्दस्य लुङ् न भवति। स्थानिभेदेन लुको भेदमाश्रित्य प्रथमलुकः असिद्धत्वेन व्यवधानादिति स्थिति'। एवमिहापीत्यर्थ'। **अतः इति** ॥ प्रथमटिलोपस्यासिद्ध-

न । अङ्गवृत्तपरिभाषया वा । चङ्यग्लोपित्वादुपधाह्रस्वो न । अतितिरायत् । सध्र्यञ्चमाचष्टे सध्राययति । अससध्रायत् । विष्वद्र्यञ्चम् अविविष्वद्रायत् । देवद्र्यञ्चम् अदिदेवद्रायत् । अदद्र्यञ्चम् आददद्रायत् । अदमुयञ्चम् अदमु-आययति । आददमुआयत् । अमुमुयञ्चम् अमुमुआययति । चङ् । आमुमु-आयत् । भुवं भावयति । अबीभवत् । भ्रुवम् । अबुभ्रवत् । श्रियम् अशिश्रयत् । गाम् अजूगवत् । रायम् अरीरयत् । नावम् अनूनवत् । स्वश्वं स्वाशश्वत् । स्वः । अव्ययानां भमात्रे टिलोपः । स्वयति । असस्वत्—

---

त्वादित्यर्थः । **अङ्गवृत्तपरिभाषया वेति** ॥ पुनष्टिलोपो नेत्यनुषज्यते । न च तिरेरिकारस्याङ्गवृत्तपरिभाषया टेरिति लोपाभावे तिराययतीति वृद्धिरपि तस्य न स्यादिति वाच्यम् । अङ्गवृत्तपरिभाषाया अनित्यत्वेन वृद्धिविषये तदप्रवृत्तेः । **अग्लोपित्वादिति** ॥ तिरस् अच् इ इति स्थिते 'टेः' इत्यतो धातोर्लोपे सति तिरि इत्यस्य अग्लोपित्वम् अचो धातोर्लोपे अकारस्यापि लोपसत्त्वादित्यभिमानः । **सध्राययतीति** ॥ सहस्य सध्रि । तिराययतीतिवद्रूपम् । सहेत्यस्य उपसर्गत्वाभावान्न पृथक्करणम् । तदाह । **अससध्रायदिति** ॥ **विष्वद्र्यञ्चमिति** ॥ विष्वक् अच् इ इति स्थिते 'विष्वग्देवयोश्च' इति विष्वक्शब्दटेरद्र्यादेशे टेरित्यचो धातोर्लोपे विष्वद्रि इ इति स्थिते वृद्धौ आयादेशे विष्वद्रायि इति ण्यन्ताल्लटि विष्वद्राययतीति रूपम् । **देवद्र्यञ्चमिति** ॥ देवशब्दस्य टेरद्र्यादेशे देवद्राययतीति सिद्धवत्कृत्य लुङयाह । **अदिदेवद्रायदिति** ॥ अतितिरायदितिवद्रूपम् । **आददद्रायदिति** ॥ सर्वनामस्थानत्वाददस्शब्दस्य टेरद्र्यादेशः । त्यदाद्यत्वे सत्येव उत्त्वमत्त्वे इति पक्षे इदम् । अदस्शब्दाद्विभक्तेर्लुका लुप्तत्वेन विभक्तिपरकत्वाभावेन त्यदाद्यत्वाप्रवृत्तेः । त्यदाद्यत्वाविषयत्वेऽपि उत्त्वमत्त्वे स्त इति मतमाश्रित्य आह । **अमुमुयञ्चमिति** ॥ अदस् अच् इ इति स्थिते टेरद्र्यादेशे अच् इत्यस्य टेर्लोपे अदद्रि इ इति स्थिते 'अदसोऽद्रेः पृथङ्मुत्वम्' इति मते दकाराकारयोर्दकाररेफयोश्च मत्वोत्त्वयोः कृतयोः अमुमु इ इति स्थिते प्रथमस्य इकारस्य णिचि वृद्धौ आयादेशे अमुमु आयि इति ण्यन्ताल्लडादीति भावः । मुत्वस्यासिद्धत्वान्न यण् । **अदमुआययतीति** ॥ 'केचिदन्त्यसदेशस्य' इति मते इदम् । **भुवमिति** ॥ भुवमाचष्टे इत्यर्थे भूशब्दात् णिच् वृद्ध्यावादेशौ भावि इत्यस्माल्लडादीति भावः । **अबीभवदिति** ॥ 'ओः पुयण्जि' इति इत्त्वम् । **अबुभ्रवदिति** ॥ 'अचि श्नुधातु' इति उवङ् । अवर्णपरत्वाभावात् 'ओः पुयण्जि' इति न । **स्वश्वमिति** ॥ सु शोभनः अश्वः इति विग्रहः । **स्वाशश्वदिति** ॥ उपसर्गसमानाकारस्य पृथक्करणादश्वशब्दस्य 'अजादेर्द्वितीयस्य' इति द्वित्वमाडागमश्च । **स्वरिति** ॥ स्वर् इत्यस्माण्णिचि 'अव्ययानाम्भमात्रे' इति टिलोपः। इष्ठवत्त्वेन भत्वात् 'प्रकृत्यैकाच्' इति प्रकृतिभावस्तु येननाप्राप्तिन्यायेन टेरित्यस्यैव बाधकः । **असस्वदिति** ॥ द्वित्वे कार्ये णावजादेशस्य निषेधात् टिलोपम्बाधित्वा स्वर्शब्दस्य द्वित्वम् । अरित्यस्य लोपे अकारस्यापि लोपसत्त्वेन

असिस्वत् । बहून्भावयति । बहयतीत्यन्ये । स्रग्विणं स्रजयति । संज्ञापूर्वकत्वान्न वृद्धिः । श्रीमतीं श्रीमन्तं वा श्रययति । अशिश्रयत् । पयस्विनीं पयसयति । इह टिलोपो न । तदपवादस्य लुकः प्रवृत्तत्वात् । स्थूलं स्थवयति । दूरं दवयति । कथं तर्हि 'दूरयत्यवनते विवस्वति' इति । दूरमतति अयते वा दूरात्, दूरातं कुर्वतीत्यर्थः । युवानं यवयति—कनयति । 'युवाल्पयोः—' (सू २०१९) इति वा कन् । अन्तिकं नेदयति । बाढं

अजादेशत्वादिति भावः । **असिस्वदिति** ॥ अलोपस्य अजादेशत्वन्नेति मते द्वित्वे कार्ये णौ टिलोपस्य निषेधाभावात् टिलोपे कृते णिचा सह स्विशब्दस्य द्वित्वमिति भाव । **बहूनिति** ॥ बहुशब्दाण्णिचि णाविष्ठवदित्यतिदेशात् 'बहोर्लोपो भूच बहो' इति बहोर्भूभावः। इष्ठस्य यिट्चेति यिडागमस्तु न। णाविष्ठवदिति सप्तम्या इष्ठनि परे दृष्टस्यैव कार्यस्यातिदेशादिति भावः । **बहयतीति** ॥ यिडभावे तत्सान्नियोगशिष्टस्य भूभावस्याप्यभावादिति भावः । **स्रजयतीति** ॥ इष्ठवत्त्वात् 'विन्मतो.' इति लुक् । नचाजादी गुणवचनादेवेति इष्ठन्प्रत्ययः स्रग्विन्शब्दात् दुर्लभ इति इष्ठवत्त्वमत्र कथमिति शङ्क्यम् । 'विन्मतो.' इति लुग्विधानेन स्रग्विन्शब्दादिष्ठवत्त्वसिद्धेरिति भावः। उपधावृद्धिमाशङ्क्य आह । **संज्ञापूर्वकत्वान्न वृद्धिरिति** ॥ णाविष्ठवदित्यनेनातिदेशेन विनो लुकस्सत्वादङ्गवृत्तपरिभाषया न वृद्धिरिति कैयटः । **श्रीमतीमिति** ॥ श्रीमतीशब्दाण्णिचि णाविष्ठवदित्यतिदेशेन 'भस्याढे' इति पुवत्त्वे 'विन्मतोः' इति मतो लुकि रेफादिकारस्य वृद्ध्यायादेशयो श्रायि इत्यस्मात् लडादीति भावः। **अशिश्रयदिति**॥ णावच आदेशो नेति वृद्ध्यायादेशयो प्रागेव श्रीशब्दस्य द्वित्वे उत्तरखण्डे वृद्ध्यायादेशयोः कृतयोरुपधाह्रस्व इति माधवः । मतुपो लुकि अकारस्यापि लोपसत्त्वेन अग्लोपित्वान्नोपधाह्रस्वः इत्यन्ये । **पयस्विनीमिति** ॥ णिचि इष्ठवत्त्वाद्विन्मतोरिति मतुपो लुगिति भावः । पयसयतीत्यत्र इष्ठवत्त्वात् टिलोपमाशङ्क्य आह । **इह टिलोपो नेति** ॥ कुत इत्यत आह । **तदपवादस्येति** ॥ न च टिलोपम्बाधित्वा मतुपो लुकि कृते पयसष्टेर्लोपः कुतो न स्यादिति वाच्यम् । सत्यपि सम्भवे बाधनमिति न्यायेन पयसष्टिलोपस्यापि मतुपो लुका बाधात् । **स्थवयतीति**॥ स्थूलशब्दात् णिचि इष्ठवत्त्वात् स्थूलदूरेति स्थूलशब्दस्य यणादेर्लोपे ऊकारस्य गुणे अवादेशे स्थवि इत्यस्माल्लडादीति भावः । गुणे ओकारस्याचो ञ्णितीति वृद्धिस्तु न शङ्क्यम्। अङ्गकार्ये कृते पुनरङ्गकार्यस्याप्रवृत्तेः । **दवयतीति** ॥ पूर्ववद्यणादिलोपो गुणश्च । **कथन्तर्हीति** ॥ स्थूलदूरेति यणादिलोपस्य टिलोपापवादत्वादिति भाव. । **दूरमततीति** ॥ 'अत सातत्यगमने' इति धातोः 'अन्येभ्योऽपि दृश्यते' इति क्विपि दूरादिति रूपम् । अय गताविस्यस्मात् क्विपि 'लोपो व्योः' इति यलोपे 'ह्रस्वस्य पिति' इति तुकि दूरादित्येव रूपम् । तस्माण्णौ टिलोपे दूरि इति ण्यन्तात् शतृप्रत्यये शपि इकारस्य गुणे अयादेशे दूरयच्छब्दस्य दूरयतीति सप्तम्यन्तमिति भावः। तदाह। **दूरातं कुर्वतीत्यर्थः इति**॥ कुर्वतीति सप्तम्यन्तम्। **यवयतीति**॥ युवन्शब्दात् णौ स्थूलदूरेति वनो यणादेर्लोप.। पूर्वस्य उकारस्य गुणे अवादेशः । यवि इत्यस्माल्लडादि । **कनयतीति** ॥ युवन्शब्दस्य कनादेशपक्षे रूपम् । तदाह । **युवाल्पयोरिति** ॥ **नेदयतीति** ॥

साधयति । प्रशस्यं प्रशस्ययति । इह श्रज्यौ न, उपसर्गस्य पृथक्कृतेः । वृद्धं ज्यापयति। प्रियं प्रापयति। स्थिरं स्थापयति । स्फिरं स्फापयति। उरुं वरयति-वारयति । बहुलं बंहयति । गुरुं गरयति । वृद्धं वर्षयति । तृप्रं त्रपयति । दीर्घं द्राघयति । बृन्दारकं बृन्दयति ।

इति णिङन्तनामधातुप्रकरणम् ।

# ॥ अथ तिङन्तकण्ड्वादिप्रकरणम् ॥

## २६७८ । कण्ड्वादिभ्यो यक् । (३-१-२७)

एभ्यो धातुभ्यो नित्यं यक्स्यात्स्वार्थे । 'धातुभ्यः' किम् । प्रातिपदिकेभ्यो मा भून् । द्विधा हि कण्ड्वादयः, धातवः प्रातिपदिकानि च ।

अन्तिकशब्दस्य णौ नेदादेशः । अन्तिकबाढयोर्नेदसाधावित्युक्तेः । **साधयतीति** ॥ बाढशब्दस्य णौ साधादेशः । **इहेति** ॥ प्रशस्ययतीत्यत्र 'प्रशस्यस्य श्र.' 'ज्यच' इति श्रज्यौ नेत्यर्थः । कुत इत्यत आह । **उपसर्गस्येति** ॥ तत्पृथक्करणे सति विशिष्टस्य स्थानिनोऽभावान्नादेशाविति भावः । **वृद्धं ज्यापयतीति** ॥ वृद्धस्य चेति वृद्धशब्दस्य ज्यादेशे वृद्धौ पुगिति भाव. । 'प्रियस्थिर' इति सूत्रक्रमेणोदाहरति । **प्रियम्प्रापयतीति** ॥ प्रियशब्दस्य प्रादेशे वृद्धि पुक् । **स्थापयतीति** ॥ स्थिरशब्दस्य स्थादेशे वृद्धिपुकौ । **वरयति-वारयतीति** ॥ उरुशब्दस्य वर् । सञ्ज्ञापूर्वकविधेरनित्यत्वादुपधावृद्धिविकल्प इति माधव । **बंहयतीति** ॥ बहुलस्य बहादेश. । **गरयतीति** ॥ गुरोः गर् । **वृद्धं वर्षयतीति** ॥ वृद्धस्य वर्षादेशः । वृद्धस्य चेति ज्यादेशेन विकल्प्यते । **त्रपयतीति** ॥ तृप्रस्य त्रप् आदेशः । अदुपधः । सञ्ज्ञापूर्वकत्वान्न वृद्धिः । गरयतीत्यादिवत् । त्रापयतीति क्वचित्पाठ. । **द्राघयतीति** ॥ दीर्घस्य द्राघादेशः । **बृन्दयतीति** ॥ बृन्दारकस्य बृन्दादेशः ॥

इति श्रीसिद्धान्तकौमुदीव्याख्यायाम्बालमनोरमायां
नामधातुप्रक्रिया समाप्ता ।

अथ कण्ड्वादिप्रक्रिया निरूप्यन्ते ॥ **कण्ड्वादिभ्यो यक् । धातुभ्यः इति** ॥ 'धातोरेकाचः' इत्यतस्तदनुवृत्तेरिति भावः । **नित्यमिति** ॥ आधृषाद्वेति वाग्रहणन्तु निवृत्तमिति भावः। अन्यथा कण्डूतीत्याद्यपि स्यादिति भावः । **द्विधा हीति** ॥ एतच्च भाष्ये स्पष्टम्। तेन

'कण्डूञ् गात्रविघर्षणे'। कण्डूयति—कण्डूयते। 'मन्तु अपराधे'। रोष इत्येके। मन्तूयति। चन्द्रस्तु ञितमाह। मन्तूयते। 'वल्गु पूजामाधुर्ययोः" वल्गूयति। 'असु उपतापे' 'असु, असूञ्' इत्येके। अस्यति। असूयति—असूयते। 'लेट् लोट् धौर्त्ये, पूर्वभावे, स्वप्ने च' दीप्तावित्येके। लेट्यति। लेटिता। लोट्यति। लोटिता। 'लेला दीप्तौ'। 'इरस्, इरज्, इरञ्, ईर्ष्यायाम्' इरस्यति। इरज्यति। 'हलि च' (सू ३५४) इति दीर्घः। ईर्यति—ईर्यते। 'उषस् प्रभातीभावे' 'वेदे, धौर्त्ये, स्वप्ने च' 'मेधा आशुग्रहणे'। मेधायति। 'कुषुभ क्षेपे। कुषुभ्यति। 'मगध परिवेष्टने'। 'नीच दास्ये' इत्यन्ये। 'तन्तस् पम्पस् दुःखे'। 'सुख दुःख तत्क्रियायाम्' सुख्यति। दुःख्यति। सुखं दुःखं चानुभवतीत्यर्थः। 'सपर पूजायाम्'। 'अरर आराकर्मणि'। भिषज् चिकित्सायाम्'। 'भिष्णज् उपसेवायाम्। 'इषुध शरधारणे'। 'चरण वरण गतौ। 'चुरण चौर्ये'। 'तुरण त्वरायाम्'। 'भुरण धारणपोषणयोः'। 'गद्गद वाक्स्खलने'। 'एला केला खेला विलासे'। 'इल इत्यन्ये'। 'लेखा स्खलने च'। अदन्तोऽयमित्यन्ये। लेख्यति। 'लिट अल्पकुत्सनयोः' लिट्यति। 'लाट जीवने'। 'हृणीङ् रोषणे लज्जायां च'। 'महीङ् पूजायाम्'। महीयते। पूजां लभते इत्यर्थः। 'रेखा श्लाघासादनयोः'। 'द्रवस् परितापपरिचरणयोः। 'तिरस् अन्तर्धौ'। 'अगद नीरोगत्वे'। 'उरस् बलार्थः'। उरस्यति। बलवान्भवतीत्यर्थः। 'तरण गतौ'। 'पयस् प्रसृतौ'। 'सम्भूयस् प्रभूतभावे'। 'अम्बर संवर संभरणे'। आकृतिगणोऽयम्। इति तिङन्तकण्ड्वादिप्रकरणम्।

---

कण्डूरित्यादिरपि गृहीतरूपसिद्धिः। **लेटितेति** ॥'यस्य हलः' इति यलोपः। **मेधा आशुग्रहणे इति** ॥ आशुग्रहणन्त्वरया बोधः। सुग्रहणे इति पाठान्तरम्। **सुख्यतीति** ॥ यकि अतो लोपः। प्रातिपदिकेभ्यो यकि तु आर्द्धधातुकत्वाभावादल्लोपो न स्यादिति बोध्यम्। चौरादिकयोस्तु सुखयति दुःखयतीत्युक्तम्। **अरर आराकर्मणीति** ॥ आरा प्रतोदः तत्करणकं कर्म आराकर्म। **भिषज् चिकित्सायाम्** ॥ जान्तोऽयम्। भिषज्यति। **लेखा स्खलने चेति** ॥ लेखायति। **लेख्यतीति** ॥ अदन्ताद्यकि अतो लोपः। **आकृतिगणोऽयमिति** ॥ कण्ड्वादय इत्यर्थः। तेन दुवस् सन्दीपने इत्यादिसङ्ग्रहः। "समिधा अग्निं दुवस्यते" ॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां कण्ड्वादयः समाप्ताः ॥

# ॥ अथ तिङन्तप्रत्ययमालाप्रकरणम् ॥

कण्डूयतेः सन् । 'सन्यङोः' (सू २३९५) इति प्रथमस्यैकाचो द्वित्वे प्राप्ते 'कण्ड्वादेस्तृतीयस्येति वाच्यम्' (वा ३४०४)। कण्डूयियिषति। क्यजन्तात्सन्। 'यथेष्टं नामधातुषु' (वा ३४०६) । आद्यानां त्रयाणामन्यतमस्य द्वित्वमित्यर्थः । अजादेस्त्वाद्येतरस्य । पुपुत्रीयिषति–पुतित्रीयिषति–पुत्रीयियिषति । अशिश्वीयिषति–अश्वीयियिषति । नदराणां संयुक्तानामचः परस्यैव द्वित्वनिषेधः । इन्द्रीयतेः सन् । द्रीशब्दयिशब्दयोरन्यतरस्य द्वित्वम् । इन्दिद्रीयिषति–इन्द्रीयियिषति । चिचन्द्रीयिषति–चन्दिद्रीयिषति–चन्द्रीयियिषति–प्रियमाख्यातुमाचक्षाणं प्रेरयितुं वेच्छति । पिप्रापयिषति–प्रापिपयिषति

---

अथ प्रत्ययमाला वक्ष्यन्नाह । **कण्डूयतेस्सन्निति** ॥ 'धातोः कर्मणः' इत्यनेनेति भाव.। **प्रथमस्यैकाचः इति** ॥ 'अजादेर्द्वितीयस्य' इति द्वित्वे प्राप्ते इत्यपि ज्ञेयम् । **कण्ड्वादेस्तृतीयस्येति** ॥ एकाचो द्वित्वमिति शेष । कण्ड्वादेरित्यनन्तर यगन्तस्येति शेष । केवलकण्ड्वादिषु तृतीयैकाचोऽभावात् । **कण्डूयियिषतीति** ॥ कण्डूयेति यगन्तात् सनि इटि अतो लोप.। **क्यजन्तात्सन्निति** ॥ उदाह्रियते इति शेषः। यिस् इति तृतीयस्यैकाचो द्वित्वम्। असु उपतापे कण्ड्वादिः। असूयियिषति। अजादेस्तृतीयस्य एकाचो द्वित्वम्। यथेष्टन्नामधातुष्वित्यपि वार्तिकम्। नाम प्रातिपदिक तद्घटितधातुष्वित्यर्थः। **आद्यानां त्रयाणामिति**॥ **अजादेस्त्वाद्येतरस्येति**॥ अजादेरित्यनुवृत्त्या आदिभूतादच· परेषामेकाचां यथेष्टमिति लाभादितिभावः। **नदराणामिति** ॥ तेषां मध्ये आदिभूतादच.परस्यैवेत्यर्थ.। **इन्द्रीयतेस्सन्निति** ॥ इन्द्रशब्दात् क्यजन्तात्सन्नित्यर्थ. । **द्रीशब्दयिशब्दयोरिति** ॥ नकारस्य आदिभूतादचः परत्वान्न द्वित्वम् । दकारस्य तु आदिभूतादच. परत्वाभावान्न द्वित्वनिषेध इति भावः । **चिचन्द्रीयिषतीति** ॥ चन्द्रीयतेस्सनि प्रथमस्यैकाचो द्वित्वम्। **चन्दिद्रीयिषतीति** ॥ द्वितीयस्यैकाचो द्वित्व दकारस्य। 'नन्द्राः' इति नकारस्य न द्वित्वमिति माधवः। आदिभूतादचः परेषान्नदराणां न द्वित्वमित्येव भाष्यसम्मतम्। अत्र नकारस्यापि न द्वित्वमित्येव युक्तम् । **चन्द्रीयियिषतीति** ॥ तृतीयस्यैकाचो द्वित्वम् । **प्रियमिति** ॥ प्रियमाख्यातुमिच्छतीत्यर्थे 'तत्करोति तदाचष्टे' इति ण्यन्तात्सनि इटि णाविष्ठवत्त्वात्प्रियशब्दस्य 'प्रियस्थिर' इति प्रादेशे वृद्धौ पुकि णिचो गुणायादेशयोष्षत्वे प्रापयिषेत्येव सन्नन्तम् । प्रियमाचक्षाण प्रेरयितुमिच्छतीत्यर्थे तु प्रापि इति ण्यन्तादुक्ताद्धेतुमण्णौ तदन्तात् सनि इटि द्वितीय णिचमाश्रित्य प्रथमणिचो लोपे द्वितीयणिचो गुणायादेशयोः प्रापयिषेत्येव सन्नन्तम् । तत्र यथेष्टन्नामधातुष्वित्याद्यानान्त्रयाणामेकाचामेकैकस्य द्वित्वेऽपि

—प्रापयियिषति। उरुं विवारयिषति—वारिरयिषति—वारयियिषति। बाढं सिसाधयिषतीत्यादिरूपत्रयम्। षत्वं तु नास्ति। 'यङ्सन्ण्यन्तात्सन्'। बोभूयिषयिषति। यङ्णिच्सन्नन्ताण्णिच्। बोभूययिषतीत्यादि।

इति तिङन्तप्रत्ययमालाप्रकरणम्।

---

प्रापयिषतीत्यादि रूपत्रयमित्यर्थः। **उरुमिति** ॥ उरुमाख्यातुमाचक्षाणम्प्रेरयितु वेच्छतीत्यर्थे उरुशब्दादाचष्टे इत्यर्थे णिचि 'प्रियस्थिर' इति वरादेशे उपधावृद्धौ वारि इति ण्यन्तात्सनि इटि णिचो गुणायादेशयोष्षत्वे वारयिषेति सन्नन्तम्। माधवमते वृद्ध्यङ्गीकारात् वारि इत्यस्मात् हेतुमण्ण्यन्तात् सनि इटि प्रथमणेर्लोपे षत्वे वारयिषेत्येव रूपम्। तत्र यथेष्टन्नामधातुष्वित्येकैकस्य एकाचो द्वित्वे विवारयिषतीत्यादि रूपत्रयामित्यर्थ। **बाढं सिसाधयिषतीति** ॥ बाढमाख्यातुमाचक्षाण प्रेरयितु वेच्छतीत्यर्थे णिजादि पूर्ववत्। अन्तिकबाढयोरिति साधादेशः। तत्र सकारस्यादेशत्वाभावान्न षत्वम्। तदाह। **षत्वन्तु नास्तीति** ॥ बोभूयिषयिषतीत्यत्र प्रक्रिया दर्शयति। **यङिति** ॥ भूधातोरिति शेष.। द्वित्वे बोभूयेति स्थितम्। **सन्निति** ॥ इटि अतो लोपे षत्वे बोभूयिषेति स्थितम्। **ण्यन्तात् सन्निति** ॥ बोभूयिषेत्यस्मात् हेतुमण्णिचि अतो लोपे बोभूयिषि इति स्थितम्। तस्मात् सनि इटि णिचो गुणायादेशयोः षत्वे बोभूयिषयिषेति स्थितम्। ततो लटास्तिपि शपि पररूपे बोभूयिषयिषतीति रूपम्। अनभ्यासस्येत्युक्तेर्न पुनर्द्वित्वम्। अथ बोभूययिषतीत्यत्र प्रक्रियान्दर्शयति। **यङिति** ॥ भूधातोरिति शेषः। द्वित्वे बोभूयेति स्थितम्। **णिजिति** ॥ बोभूयेत्यस्माद्धेतुमण्णौ अतो लोपे बोभूयि इति स्थितम्। **सन्नन्ताण्णिजिति** ॥ बोभूयि इत्यस्मात्सनि इटि णिचो गुणायादेशयोः षत्वे बोभूययिषेति स्थितम्। तस्माद्धेतुमण्णिचि अतो लोपे बोभूययिषि इत्यस्माल्लटास्तिपि शपि पररूपे बोभूययिषयतीति रूपं सिद्धम् ॥

इति श्रीवासुदेवदीक्षितविदुषा विरचिताया सिद्धान्तकौमुदीव्याख्याया बालमनोरमायाम्प्रत्ययमाला समाप्ता।

# ॥ अथ तिङन्तात्मनेपदप्रकरणम् ॥

'अनुदात्तङित आत्मनेपदम्' (सू २१५७)। आस्ते । शेते ।

## २६७९ । भावकर्मणोः । (१-३-१३)

बभूवे । अनुबभूवे ।

## २६८० । कर्तरि कर्मव्यतिहारे । (१-३-१४)

क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदं स्यात् । व्यतिलुनीते । अन्यस्य योग्यं लवनं करोतीत्यर्थः। 'श्नसोरल्लोपः' (सू २४६९)। व्यतिस्ते। व्यतिषाते। व्यतिषते। 'तासस्त्योः—' (सू २१९१) इति सलोपः । व्यतिसे । 'धि च' (सू २२४९) । व्यतिध्वे । 'ह एति' (सू २२५०) । व्यतिहे । व्यत्यसै ।

---

अथ आत्मनेपदप्रक्रिया निरूप्यन्ते ॥ आत्मनेपदपरस्मैपदव्यवस्थापकानि सूत्राणि प्रथमस्य तृतीयपादे पठितानि । तानि क्रमेण व्याख्यास्यन् व्याख्यातमपि सूत्रं पुनः स्मारयति । **अनुदात्तङितः इति** ॥ आत्मनेपदमित्येतत् 'शेषात्कर्तरि परस्मैपदम्' इत्यतः प्रागनुवर्तते । **भावकर्मणोः** ॥ भावः भावना क्रियेति पर्याया. । कर्मशब्द कर्मकारके वर्तते । भावे कर्मणि च यो लकारस्तस्यात्मनेपदमित्यर्थः । भावे उदाहरति । **बभूवे इति** ॥ वृत्ता भवनक्रियेत्यर्थः । कर्मण्युदाहरति । **अनुबभूवे इति** ॥ आनन्द इति शेषः । आनन्दकर्मिका वृत्ता अनुभोगक्रियेत्यर्थ· । **कर्तरि कर्म** ॥ कर्मव्यतिहारशब्द विवृण्वन्नाह । **क्रियाविनिमये द्योत्ये इति** ॥ एवञ्च कर्मशब्द· क्रियापर· । व्यतिहारशब्दो विनिमयपर इत्युक्त भवति । **अन्यस्येति** ॥ शूद्रादियोग्य सस्यादिलवन ब्राह्मण करोतीत्यर्थ । परस्परकरणमपि कर्मव्यतिहार इति कैयटः। सम्प्रहरन्ते राजानः। कर्तृग्रहणम्भावकर्मणोरित्यस्यानुवृत्तिनिवृत्त्यर्थम्। अन्यथा व्यतिलुनीत इत्यत्र न स्यात् । वस्तुतस्तु पृथक् सूत्रारम्भादेव सिद्धे कर्तृग्रहणमुत्तरार्थमिति भाष्ये स्पष्टम् । व्यति अस् ते इति स्थिते आह । **श्नसोरिति** ॥ **व्यतिस्ते इति** ॥ तपसे अयोग्यः शूद्रस्तापस्वी भवतीत्यर्थ । इह 'उपसर्गप्रादुर्भ्याम्' इति न षः । यचपरकत्वाभावादिति भावः । **व्यतिषाते इति** ॥ इह अच्परकत्वादुपसर्गप्रादुर्भ्यामिति ष· । व्यति स् से इति स्थिते आह । **तासस्त्योरिति** ॥ 'उपसर्गप्रादुर्भ्याम्' इति नेह षत्वम् । अस्त्यवयवस्य सकारस्य लुप्तत्वात् । व्यतिषाथे । व्यति स् ध्वे इति स्थिते आह । **धि चेति** ॥ सलोप इति शेषः । व्यतिस् ए इति स्थिते आह । **ह एतीति** ॥ सकारस्य हकार इति भावः· । **व्य-**

व्यत्यास्त । व्यतिषीत । व्यतिराते । व्यतिराते । व्यतिराते । व्यतिभाते । व्यतिभाते । व्यतिभाते । व्यतिबभे ।

## २६८१ । न गतिहिंसार्थेभ्यः । (१-३-१५)

व्यतिगच्छन्ति । व्यतिघ्नन्ति । 'प्रतिषेधे हसादीनामुपसंख्यानम्' (वा ८९८) हसादयो हसप्रकाराः शब्दक्रियाः । व्यतिहसन्ति । व्यतिजल्पन्ति । 'हरतेरप्रतिषेधः' (वा ८९९) । संप्रहरन्ते राजानः ।

## २६८२ । इतरेतरान्योऽन्योपपदाच्च । (१-३-१६)

'परस्परोपपदाच्चेति वक्तव्यम्' (वा ९००) । इतरेतरस्यान्योऽन्यस्य परस्परस्य वा व्यतिलुनन्ति ।

## २६८३ । नेर्विशः । (१-३-१७)

निविशते ।

## २६८४ । परिव्यवेभ्यः क्रियः । (१-३-१८)

अकर्त्रभिप्रायार्थमिदम् । परिक्रीणीते । विक्रीणीते । अवक्रीणीते ।

## २६८५ । विपराभ्यां जेः । (१-३-१९)

विजयते । पराजयते ।

---

**त्यसै इति** ॥ लोडुत्तमपुरुषैकवचनम् । **व्यत्यास्तेति** ॥ लङि रूपम् । **व्यतिषीतेति** ॥ लिङि रूपम् । **व्यतिराते इति** ॥ लटि प्रथमपुरुषैकद्विबहुवचनेषु समानमेव रूपम् । **व्यतिभाते इति** ॥ भाधातो रूपम् । **व्यतिबभे इति** ॥ लिटि रूपम् । **न गतिहिंसार्थेभ्यः** । कर्मव्यतिहारे आत्मनेपदन्नेत्यर्थः। हसादिगणस्य अदर्शनादाह । **हसप्रकाराः इति** ॥ उपसर्गमनपेक्ष्य ये गतिहिंसयोर्वर्तन्ते तेषामेव ग्रहणलाभाय अर्थग्रहणम् । हृञ्धातुस्तु उपसर्गबलाद्धिंसायां वर्तते इति न तस्य प्रतिषेध इत्याह । **हरतेरप्रतिषेधः इति** ॥ अर्थग्रहणलभ्यमिदं वार्तिकम् । **इतरेतर** ॥ नात्मनेपदमिति शेषः । **नेर्विशः** ॥ निपूर्वाद्विशः आत्मनेपद स्यादित्यर्थः । नेति निवृत्तम् । यद्यपि न्यविशतेत्यत्र न विशिर्नेः परः । अटा व्यवधानात् । अटो विकरणान्ताङ्गभक्तत्वेन विशधात्ववयवत्वाभावात् । तथापि 'अड्व्यवाये उपसङ्ख्यानम्' इति वार्तिकाद्भवतीति 'शदेः शितः' इत्यत्र भाष्ये स्पष्टम् । **परिव्यवेभ्यः** ॥ परि वि अव एभ्यः परस्मात् क्रीञ्धातोरात्मनेपदमित्यर्थः । ञित्त्वादात्मनेपदसिद्धेः किमर्थमिदमित्यत आह । **अकर्त्रभिप्रायार्थमिति** ॥ **विपराभ्याञ्जेः** ॥ वि परा आभ्याम्परस्मात् जिधातोरात्मनेपदमित्यर्थः । **विजयते इति** ॥ उत्कृष्टो भवतीत्यर्थः । **पराजयते इति** ॥ निकृष्टो भवतीत्यर्थः ।

## २६८६। आङो दोऽनास्यविहरणे। (१-३-२०)

आङ्पूर्वाद्ददातेर्मुखविकसनादन्यत्रार्थे वर्तमानादात्मनेपदं स्यात्। विद्यामादत्ते। 'अनास्य—' इति किम्। मुखं व्याददाति। आस्यग्रहणमविवक्षितम्। विपादिकां व्याददाति। पादस्फोटो विपादिका। नदी कूलं व्याददाति। 'पराङ्गकर्मकान्न निषेधः' (वा ९०३)। व्याददते पिपीलिकाः पतङ्गस्य मुखम्।

## २६८७। क्रीडोऽनुसंपरिभ्यश्च। (१-३-२१)

चादाङः। अनुक्रीडते। संक्रीडते। परिक्रीडते। आक्रीडते। अनोः कर्मप्रवचनीयान्न। उपसर्गेण समा साहचर्यात्। माणवकमनुक्रीडति। तेन सहेत्यर्थः। 'तृतीयार्थे' (सू ५४९) इत्यनोः कर्मप्रवचनीयत्वम्। 'समोऽकूजने' (वा ९०४)। संक्रीडते। कूजने तु संक्रीडति चक्रम्। 'आगमेः क्षमायाम्' (वा ९०५)। ण्यन्तस्येदं ग्रहणम्। आगमयस्व तावत्। मा त्वरिष्ठा इत्यर्थः। 'शिक्षेर्जिज्ञासायाम्' (वा ९०६)। धनुषि शिक्षते। धनुर्विषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः। 'आशिषि नाथः (वा ९१०)

---

**आङो दो**॥ आस्यविहरण मुखविकसनम्। दा इत्यस्य दः इति पञ्चमी। तदाह। **ददातेर्मुखविकसनादन्यत्रेति** ॥ **विद्यामादत्ते इति** ॥ गृह्णातीत्यर्थः। दाञो ञित्त्वेऽप्यकर्त्रभिप्रायार्थमिदम्। **अविवक्षितमिति** ॥ अविहरणे इत्येतावदेव विवक्षितमित्यर्थः। **विपादिकां व्याददातीति** ॥ क्षारौषधादिना विदारयतीत्यर्थः। अत्र आस्यविहरणाभावेऽपि विकसनसत्वान्नात्मनेपदमिति भावः। **नदी कूलं व्याददातीति** ॥ भिनत्तीत्यर्थः। अत्रापि विकसनसत्त्वादास्यविहरणाभावेऽपि नात्मनेपदम्। **पराङ्गकर्मकान्न निषेधः इति** ॥ वार्तिकम्। **पतङ्गस्येति** ॥ पक्षिणो मुखम्भक्षणाय विकासयन्तीत्यर्थः। **क्रीडोऽनु** ॥ **चादाङः इति** ॥ तथाच अनु सम् परि आङ् एभ्यः परस्मात् क्रीडधातोरात्मनेपदमित्यर्थः। 'अनोऽकर्मप्रवचनीयात्' इति वार्तिकम्। तदिदं न्यायसिद्धमित्याह। **उपसर्गेण समेति** ॥ 'समोऽकूजने' इति वार्तिकम्। समः परस्मात् अकूजने विद्यमानात् क्रीडेरात्मनेपदमित्यर्थः। **कूजने तु संक्रीडति चक्रमिति** ॥ कूजतीत्यर्थः। **आगमेः क्षमायामिति** ॥ आत्मनेपदमिति शेषः। वार्तिकमिदम्। **ण्यन्तस्येदं ग्रहणमिति** ॥ भाष्ये ण्यन्तस्यैवोदाहरणादिति भावः। **आगमयस्व तावदिति** ॥ किञ्चित्काल सहस्वेत्यर्थः। आङुपसर्गवशात् गमधातुः क्षमायां वर्तते। 'हन्त्यर्थाश्च' इति चुरादिगणसूत्रेण स्वार्थे णिच्। चुरादेराकृतिगणत्वाद्वा। **मा त्वरिष्ठाः इति** ॥ फलितार्थकथनम्। 'शिक्षेर्जिज्ञासायाम्' इत्यपि वार्तिकम्। **धनुषि शिक्षते इति** ॥ वैषयिके आधारे सप्तमी। शकिस्सन्नन्तः। 'सनि मीमा' इति इस्। अभ्यासलोपश्च। तदाह। **धनुर्विषये इत्यादि** ॥ 'शिक्ष विद्योपादाने' इत्यस्य तु नेह ग्रहणम्। अनुदात्तेत्त्वादेव सिद्धेरिति भावः।

आशिष्येवेति नियमार्थं वार्तिकमित्युक्तम् । सर्पिषो नाथते । सर्पिर्मे स्यादित्याशास्त इत्यर्थः । कथं 'नाथसे किमु पतिं न भूभृताम्' इति । 'नाधसे' इति पाठ्यम् । हरतेर्गतताच्छील्ये' (वा ९०८) । गतं प्रकारः । पैतृकमश्वाः अनुहरन्ते । मातृकं गावः । पितुर्मातुश्चागतं प्रकारं सततं परिशीलयन्तीत्यर्थः । 'ताच्छील्ये' किम् । मातुरनुहरति । 'किरतेर्हर्षजीविकाकुलायकरणेष्विति वाच्यम्' (९०७) । हर्षादयो विषयाः । तत्र हर्षो विक्षेपस्य कारणम् । इतरे फले ।

## २६८८ । अपाच्चतुष्पाच्छकुनिष्वालेखने । (६-१-४२)

अपात्किरतेः सुट् स्यात् । 'सुडपि हर्षादिष्वेव वक्तव्यः' (वा ३७०६) । अपस्किरते वृषो हृष्टः । कुक्कुटो भक्षार्थी । श्वा आश्रयार्थी च । 'हर्षादिषु' इति किम् । अपकिरति कुसुमम् । इह तङ्सुटौ न । हर्षादिमात्रविवक्षायां

---

**कथमिति** ॥ भूभृता पति किमु न नाथसे । न याचसे इत्यर्थ । आशिपः अप्रतीतेः कथमात्मनेपदमित्यर्थं । **नाधसे इति पाठ्यमिति** ॥ तवर्गचतुर्थान्तोऽयम् । "आशिपि नाथः" इति नियमस्तु तवर्गद्वितीयान्तस्यैवेति भाव । "हरतेर्गतताच्छील्ये' इति वार्तिकम् । आत्मनेपदमिति शेप । **गतं प्रकारः इति** ॥ वृत्तमित्यर्थ. । ताच्छील्य स्वभावानुसरणम् । गति ताच्छील्यमिति यावत् । गतेति पाठे भावे क्त । **पैतृकमश्वाः इति** ॥ पैतृक वृत्त अश्वाः स्वभावादनुसरन्तीत्यर्थः । **मातृकं गावः इति** ॥ अनुहरन्ते इत्यनुषज्यते । **मातुरनुहरतीति** ॥ अनुकरोतीत्यर्थ । अत्र सादृश्यमात्र विवक्षित, न तु गतिताच्छील्यमिति भावः । किरतेरिति वार्तिकम् । हर्ष प्रमोद. । जीविका जीवनोपायभक्षणम् । कुलायकरण आश्रयसम्प्राप्ति. एषु कृधातोरात्मनेपदमित्यर्थः । ननु कृधातोर्विक्षेपार्थकस्य कथमेषु वृत्तिरित्यत आह । **हर्षादयो विषयाः इति** ॥ धात्वर्थत्वाभावेऽपि पदान्तरसमभिव्याहारगम्या इत्यर्थ । **तत्रेति** ॥ तेषु हर्षादिष्वित्यर्थ. । **कारणमिति** ॥ तथाच हर्षमूलकत्व विक्षेपस्य लभ्यते इति भावः । **इतरे इति** ॥ जीविकाकुलायकरणे विक्षेपस्य साध्ये इति लभ्येते । हर्षादीनामेवंविधविषयत्वे सत्येवात्मनेपदमिति फलितम् । भाष्ये तथैवोदाहृतत्वादिति भावः । **अपाच्चतुष्पात्** ॥ 'सुट्कात्पूर्वः' इत्यधिकृतम् । 'किरतौ लवने' इत्यतः किरतावित्यनुवर्तते । तदाह । **अपात् किरतेस्सुट् स्यादिति** ॥ चतुष्पात्सु शकुनिषु च गम्येष्वित्यपि ज्ञेयम् । आलेखनङ्खननम् । सुडपि हर्षादिष्वेवेति वार्तिकम् । **अपस्किरते वृषो हृष्टः इति** ॥ हर्षाद्भूमि लिखन् धूल्यादि विक्षिपतीत्यर्थः । **कुक्कुटो भक्षार्थीति** ॥ अपस्किरते इत्यनुषज्यते । **श्वा आश्रयार्थीति** ॥ अपस्किरते इत्यनुषज्यते । **अपकिरति कुसुममिति** ॥ वृषादिरिति शेषः । ह्रियमाणो वृषादिः पादै. कुसुममवकिरतीत्यर्थः । अत्र हर्षाद्यभावान्नात्मनेपदम् । नापि सुट् । तदाह । **इह तङ्सुटौ नेति** ॥ ननु अपस्किरते वृषो हृष्ट इत्याद्युदाहरणत्रये यद्दि

यद्यपि तङ् प्राप्तस्तथापि 'सुडभावे नेष्यते' इत्याहुः । गजोऽपकिरति । 'आङि नुप्रच्छ्योः' (वा ९०९) । आनुते । आपृच्छते । 'शप उपालम्भे' (वा ९११) । आक्रोशार्थात्स्वरितेतोऽकर्तृगेऽपि फले शपथरूपेऽर्थे आत्मनेपदं वक्तव्यमित्यर्थः । कृष्णाय शपते ।

## २६८९ । समवप्रविभ्यः स्थः । (१-३-२२)

संतिष्ठते । 'स्थाघ्वोरिच्च' (सू २३८९) । समस्थित । समस्थिषाताम् । समस्थिषत । अवतिष्ठते । प्रतिष्ठते । वितिष्ठते । 'आङः प्रतिज्ञायामुपसंख्यानम्' (वा ९१२) । शब्दं नित्यमातिष्ठते । नित्यत्वेन प्रतिजानीते इत्यर्थः ।

## २६९० । प्रकाशनस्थेयाख्ययोश्च । (१-३-२३)

गोपी कृष्णाय तिष्ठते । आशयं प्रकाशयतीत्यर्थः । 'संशय्य कर्णादिषु तिष्ठते यः' । कर्णादीन्निर्णेतृत्वेनाश्रयतीत्यर्थः ।

## २६९१ । उदोऽनूर्ध्वकर्मणि । (१-३-२४)

---

हर्षजीविकाकुलायकरणान्येव विवक्षितानि न त्वालेखनमपि तदा तडेव स्यान्न तु सुट् इत्यत आह । **हर्षादिमात्रेत्यादि** ॥ **तथापीति** ॥ आलेखनाभावेऽपीत्यर्थः । **नेष्यते इति** ॥ किरतेर्हर्षजीविकेत्यात्मनेपदविधौ ससुट्कानामेव भाष्ये उदाहरणादिति भाव । भाष्यस्थान्युदाहरणान्यालेखनविषयान्येव भविष्यन्तीत्यस्वरस सूचयति । **आहुरिति** ॥ **गजोऽपकिरतीति** ॥ स्वभावाख्यानमत्रेति भावः । 'आङि नुप्रच्छ्यो' इति वार्तिकम् । **आनुते इति** ॥ सृगाल इति भाष्यम् । सृगालः उत्कण्ठापूर्वक शब्दङ्करोतीत्यर्थ इति कैयटः । ननु 'शप आक्रोशे' इत्यस्य स्वरितेत्त्वादेव सिद्धे 'शप उपालम्भने' इत्यात्मनेपदविधिर्व्यर्थ इत्यत आह । **आक्रोशार्थादिति** ॥ 'शप आक्रोशे' इति स्वरितेत- कर्तृगामिन्येव फले आत्मनेपद प्राप्तम् । अकर्तृगेऽपि फले शपथात्मकनिन्दाविशेषे विद्यमानात् तस्मात् शपधातोरात्मनेपदार्थमिदमित्यर्थः । **कृष्णाय शपते इति** ॥ 'श्लाघह्नुङ्स्थाशपाम्' इति सम्प्रदानत्वाच्चतुर्थी । **समवप्रविभ्यः स्थः** ॥ स्थ. इति पञ्चमी । सम् अव प्र वि एभ्यः परस्मात् स्थाधातोरात्मनेपदमित्यर्थः । **सन्तिष्ठते इति** ॥ समाप्तम्भवतीत्यर्थ । **प्रकाशन** ॥ प्रकाशन स्वाभिप्रायाविष्करणम् । स्थेयः विवादपदनिर्णेता । तिष्ठति विश्राम्यति विवादपदनिर्णयोऽस्मिन्नित्यर्थे बाहुलके अधिकरणे "अचो यत्" इति यत् इति व्युत्पत्तेः । 'स्थेयो विवादस्थानस्य निर्णेतरि पुरोहिते' इति मेदिनी । इह तु विवादपदनिर्णेतृत्वेनाध्यवसायो विवक्षित । आख्या अभिधानम् । प्रकाशनाख्याया स्थेयाख्यायाञ्च वर्तमानात् स्थाधातोरात्मनेपदमित्यर्थ । प्रकाशने उदाहरति । **गोपी कृष्णाय तिष्ठते इति** ॥ 'श्लाघह्नुङ्स्थाशपाम्' इति सम्प्रदानत्वाच्चतुर्थी । स्थेये उदाहरति । **संशय्येति** ॥ कर्णादिष्विति विषयसप्तमी । फलितमाह । **कर्णादीनिति** ॥ **उदोऽनूर्ध्वकर्मणि** ॥ ऊर्ध्व-

मुक्तावुत्तिष्ठते । 'अनूर्ध्वे—' इति किम् । पीठादुत्तिष्ठति । 'ईहायामेव' (वा ९१३) । नेह । ग्रामाच्छतमुत्तिष्ठति ।

## २६९२ । उपान्मन्त्रकरणे । (१-३-२५)

आग्नेय्या आग्नीध्रमुपतिष्ठते । 'मन्त्रकरणे किम्' । 'भर्तारमुपतिष्ठति यौवनेन' । 'उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति वाच्यम् (वा ९१४) । आदित्यमुपतिष्ठते । कथं तर्हि 'स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वती' इति । देवतात्वारोपात् । नृपस्य देवतांशत्वाद्वा । गङ्गा यमुनामुपतिष्ठते । उपश्लिष्यतीत्यर्थः । रथिकानुपतिष्ठते । मित्रीकरोतीत्यर्थः । पन्थाः स्रुघ्नमुपतिष्ठते । प्राप्नोतीत्यर्थः । 'वा लिप्सायामिति वक्तव्यम्' (वा ९१९) । भिक्षुकः प्रभुमुपतिष्ठते—उपतिष्ठति वा । लिप्सया उपगच्छतीत्यर्थः ।

## २६९३ । अकर्मकाच्च । (१-३-२६)

उपात्तिष्ठतेरकर्मकादात्मनेपदं स्यात् । भोजनकाल उपतिष्ठते । संनिहितो भवतीत्यर्थः ।

## २६९४ । उद्विभ्यां तपः । (१-३-२७)

---

देशसंयोगानुकूला क्रिया ऊर्ध्वकर्म । तद्भिन्नमनूर्ध्वकर्म । तद्वृत्ते स्थाधातोरुत्पूर्वादात्मनेपदमित्यर्थ. । **मुक्तावुत्तिष्ठते इति** ॥ गुरूपगमनादिना यतते इत्यर्थ । **पीठादुत्तिष्ठतीति** ॥ उत्पततीत्यर्थ॰ । 'उद ईहायामेव' इति वार्तिकम् । ईहा कायपरिस्पन्द । **ग्रामाच्छतमुत्तिष्ठतीति** ॥ लभ्यते इत्यर्थ । **उपान्मन्त्रकरणे** ॥ मन्त्रकरणकेऽर्थे विद्यमानात्स्थाधातोरात्मनेपदमित्यर्थ । **आग्नेय्या आग्नीध्रमुपतिष्ठते इति** ॥ आग्नेय्या ऋचा आग्नीध्राख्यमण्डपविशेषमुपेत्य तिष्ठतीत्यर्थ । स्थितेरकर्मकत्वेऽपि उपेत्येतदपेक्ष्य सकर्मकत्वम् । केचित्तु मन्त्रकरणके समीपावस्थितिपूर्वकस्तवे विद्यमानात् स्थाधातोरात्मनेपदमिति व्याचक्षते । तत्र स्तवः गुणवत्त्वेन सङ्कीर्तनमिति स्तुतशस्त्राधिकरणे प्रपञ्चितमस्माभि. । श्लोकै॰ राजान स्तौतीत्यर्थे श्लोकैरुपतिष्ठते इत्यात्मनेपदन्न । मन्त्रकरणकत्वाभावात् । उपाद्देवपूजा इति वार्तिकम् अमन्त्रकरणकत्वार्थम् । **आदित्यमुपतिष्ठते इति** ॥ आभिमुखीभूयावस्थितिपूर्वकस्तुत्यादिभिः पूजयतीत्यर्थ. । **कथन्तर्हीति** ॥ रघोर्देवतात्वाभावादिति भाव. । समाधत्ते । **देवतात्वारोपादिति** ॥ **नृपस्येति** ॥ 'नाविष्णु. पृथिवीपति' इत्यादिस्मरणादिति भाव. । **वा लिप्सायामिति** ॥ लिप्साहेतुकार्थवृत्ते स्थाधातोरात्मनेपद वेत्यर्थ । **अकर्मकाच्च** ॥ **उपात्तिष्ठतेरिति** ॥ 'उपान्मन्त्रकरणे' इत्यत 'समवप्रविभ्य स्थ.' इत्यतश्च तदनुवृत्तेरिति भावः । **उद्विभ्यान्तपः** ॥ अकर्मकादित्येवेति भाष्यम् । **दीप्यते इति** ॥ दीप्तिमान् भवतीत्यर्थः ।

'अकर्मकात्' इत्येव । उत्तपते । वितपते । दीप्यते इत्यर्थः । 'स्वाङ्गकर्मकाच्चेति वक्तव्यम्' (वा ९१६) । स्वमङ्गं स्वाङ्गं न तु 'अद्रवन—' इति परिभाषितम् । उत्तपते वितपते पाणिम् । नेह । सुवर्णमुत्तपति सन्तापयति—विलापयति वेत्यर्थः । चैत्रो मैत्रस्य पाणिमुत्तपति । सन्तापयतीत्यर्थः ।

## २६९५ । आङो यमहनः । (१-३-२८)

आयच्छते । आहते । अकर्मकात्स्वाङ्गकर्मकादित्येव । नेह । परस्य शिर आहन्ति । कथं तर्हि 'आजघ्ने विषमविलोचनस्य वक्षः' इति भारवि. । 'आहध्वं मा रघूत्तमम्' इति भट्टिश्च । प्रमाद एवायमिति भागवृत्तिः । प्राप्येत्यध्याहारो वा । ल्यब्लोपे पञ्चमीति तु ल्यबन्तं विनैव तदर्थावगतिर्यत्र तद्विषयम् । भेत्तुमित्यादितुमुन्नन्ताध्याहारो वास्तु । समीपमेत्येति वा ।

## २६९६ । आत्मनेपदेष्वन्यतरस्याम् । (२-४-४४)

हनो वधादेशो वा लुङि आत्मनेपदेषु परेषु । आवधिष्ट । आवधिषाताम् ।

**स्वाङ्गकर्मकाच्चेति** ॥ उद्विभ्यान्तप इत्यनुवर्तते । चकारादकर्मकसमुच्चय । स्वाङ्गशब्दोऽत्र यौगिक इत्याह । **स्वमङ्गमिति** ॥ **सुवर्णमुत्तपतीति** ॥ अस्वाङ्गकर्मकत्वादकर्मकत्वाभावाच्च नात्मनेपदमिति भाव । स्वाङ्गशब्दोऽत्र न पारिभाषिक. । किन्तु यौगिक इत्यस्य प्रयोजनमाह । **चैत्रो मैत्रस्य पाणिमुत्तपतीति** ॥ अत्र अद्रवन्मूर्तिमदित्यादिपरिभाषितस्वाङ्गकर्मकत्वेऽपि स्वकीयाङ्गकर्मकत्वाभावान्नात्मनेपदमिति भाव । **आङो यमहनः** ॥ आङ· परस्मात् यमो हनश्चात्मनेपदमित्यर्थः । **आयच्छते इति** ॥ रज्जुर्दीर्घीभवतीत्यर्थः । दीर्घीकरोति पादमिति वा । **आहते इति** ॥ सोदरमिति शेष. । **परस्य शिर आहन्तीति** ॥ स्वीयाङ्गकर्मकत्वाभावादकर्मकत्वाभावाच्च नात्मनेपदम् । **कथन्तर्हीति** ॥ स्वीयाङ्गकत्वाभावादकर्मकत्वाभावाच्चात्मनेपदासम्भवादिति भाव । **प्राप्येति** ॥ विषमविलोचनस्य वक्ष. प्राप्य आजघ्ने इति रघूत्तमम्प्राप्य माहध्वमिति च प्राप्तिक्रियाम्प्रत्येव विषमविलोचनस्य रघूत्तमस्य च कर्मतया हन्तेरकर्मकत्वादात्मनेपदन्निर्बाधमिति भाव । यद्यपि हननक्रियाम्प्रत्यपि तयोरेव वस्तुतः कर्मत्व तथापि तस्याविवक्षितत्वादकर्मकत्वमेव । 'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात् । प्रसिद्धेरविवक्षात कर्मणोऽकर्मिका क्रिया' इत्यनुपदमेव वक्ष्यमाणत्वादिति बोध्यम् । ननु प्राप्येत्यध्याहारे प्रासादात्प्रेक्षते इत्यादिवत्पञ्चमी स्यादित्यत आह । **ल्यब्लोपे इति** ॥ ल्यब्लोपे पञ्चमीत्येतत्तु यत्रार्थाध्याहारमाश्रित्य ल्यबन्तार्थावगतिः तद्विषयकम् । अत्र तु ल्यबन्तशब्दाध्याहारान्नात पञ्चमीत्यर्थ· । **भेत्तुमित्यादीति** ॥ एवञ्च ल्यब्लोपपञ्चम्या न प्रसक्तिरिति भाव· । 'आजघ्ने विषम' इत्यत्र परिहारान्तरमाह । **समीपमेत्येति वेति** ॥ अध्याहार इति शेषः ।

## २६९७ । हनः सिच् । (१-२-१४)

कित्स्यात् । अनुनासिकलोपः । आहत । आहसाताम् । आहसत ।

## २६९८ । यमो गन्धने । (१-२-१५)

सिच्कित्स्यात् । गन्धनं सूचनं परदोषाविष्करणम् । उदायत । 'गन्धने' किम् । उदायंस्त पादम् । आकृष्टवानित्यर्थः ।

## २६९९ । समो गम्यृच्छिभ्याम् । (१-३-२९)

'अकर्मकाभ्याम्' इत्येव सङ्गच्छते ।

## २७०० । वा गमः । (१-२-१३)

गमः परौ झलादी लिङ्सिचौ वा कितौ स्तः । सङ्गसीष्ट—सङ्गंसीष्ट । समगत—समगंस्त । समृच्छते । समृच्छिष्यते । 'अकर्मकाभ्याम्' किम् । ग्रामं सङ्गच्छति 'विदिप्रच्छिस्वरतीनामुपसंख्यानम्' (वा ९१८) । वेत्तेरेव ग्रहणम् । संवित्ते । संविदाते ।

## २७०१ । वेत्तेर्विभाषा । (७-१-७)

---

विषमाविलोचनस्य समीपमेत्य स्वीयमेव वक्षः मल्ल इव वीरावेशादास्फालयाञ्चक्रे इत्यर्थः । तथाच स्वाङ्गकर्मकत्वादात्मनेपद निर्बाधमिति भाव॰ । लुङि आहन् स् त इति स्थिते । **हनः सिच्** । कित्स्यादिति शेषपूरणम् । 'असयोगाल्लिट्कित्' इत्यत तदनुवृत्तेरिति भावः । हनधातोः परस्सिच कित्स्यादिति फलितम् । **अनुनासिकलोपः इति** ॥ 'अनुदात्तोपदेश' इति नकारलोप इत्यर्थः । उत् आ यम् स् त इति स्थिते । **यमो गन्धने** ॥ सिच्कित्स्यादिति शेषपूरणम् । सिच॰ कित्त्वे मकारस्य अनुदात्तोपदेश इति लोपः । **समो गम्यृच्छिभ्याम्** ॥ आत्मनेपदामिति शेषः । **अकर्मकाभ्यामित्येवेति** ॥ स्वाङ्गकर्मकाच्चेति तु निवृत्तमिति भावः । **सङ्गच्छते इति** ॥ सङ्गतम्भवतीत्यर्थ. । **वा गमः** ॥ 'इको झल्' इत्यतो झलिति 'लिङ्सिचावात्मनेपदेषु' इत्यतो लिङ्सिचाविति 'असयोगाल्लिट्' इत्यत किदिति चानुवर्तते । तदाह । **गमः परावित्यादि**॥ **समगतेति** ॥ लुङि रूपम् । सिच॰ कित्त्वपक्षे 'अनुदात्तोपदेश' इति मकारलोपे 'ह्रस्वादङ्गात्' इति सिचो लुक् । **समृच्छते इति** ॥ 'ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु' इति तौदादिकस्य रूपम् । अत्र तौदादिकस्य ऋच्छतेरेव ग्रहण, नतु ऋच्छादेशस्येति सूचयितु लृडन्तमप्युदाहरति । **समृच्छिष्यते इति** ॥ **विदिप्रच्छिस्वरतीनामिति** ॥ सम इत्यनुवर्तते । सम्पूर्वेभ्यो विदिप्रच्छिस्वरतिभ्य आत्मनेपदमित्यर्थ । **वेत्तेरिति** ॥ लुग्विकरणस्यैव विदेर्ग्रहणमित्यर्थः । व्याख्यानादिति भाव॰ । **वेत्तेर्विभाषा** ॥ 'झोऽन्तः' इत्यत. झ इत्यनुवर्तते ॥ 'अद-

वेत्तेः परस्य झादेशस्यातो रुडागमो वा स्यात् । संविद्रते । संविदते । सम्पृच्छते । संस्वरते । 'अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम' (वा ९२६) । अर्तीति द्वयोर्ग्रहणम् । अङ्विधौ त्वियर्तेरेवेत्युक्तम् । मा समृत, मा समृषाताम्, मा समृषत इति, समार्त, समार्षाताम्, समार्षत इति च भ्वादेः । इयर्तेस्तु मा समरत, मा समरेताम्, मा समरन्त इति, समारत, समारेताम्, समारन्त इति च । संशृणुते । सम्पश्यते । अकर्मकादित्येव । अत एव 'रक्षांसीति पुरापि संशृणुमहे' इति मुरारिप्रयोगः प्रामादिक इत्याहुः । अध्याहारो वा 'इति कथयद्भ्यः' इति । अथास्मिन्नकर्मकाधिकारे हनिगम्यादीनां कथमकर्मकतेति चेत् । शृणु ।

धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥

---

भ्यस्तात्' इत्यतः अदित्यनुवृत्त षष्ठ्या विपरिणम्यते । झाडो रुडित्यतो रुडिति च । तदाह । **वेत्तेः परस्येत्यादिना** ॥ **अर्तिश्रुदृशिभ्यः इति** ॥ सम्पूर्वेभ्यस्तडिति शेष । **द्वयोरिति** ॥ भौवादिकस्य इयर्तेश्चेत्यर्थ । **अङ्विधौ त्विति** ॥ 'सर्त्तिशास्त्यर्त्तिभ्यश्च' इत्यत्रेत्यर्थ. । **मा समृतेति** ॥ 'उश्च' इति सिच किच्चान्न गुण. । 'ह्रस्वादङ्गात्' इति सिचो लोप । माङ्योगे मासमृतेत्यादि । माङ्योगाभावे तु समार्तेत्यादि । इत्येवम्भौवादिकस्य ऋधातो. रूपमित्यर्थः । माङ्योगादाडभाव. । अथ माङ्योगाभावे आडागमे उदाहरति । **समार्तेति** ॥ सम् आ ऋ स् त इति स्थिते 'उश्च' इति कित्त्वाद्गुणनिषेधे 'आटश्च' इति वृद्धिम्बाधित्वा परत्वात् ह्रस्वादङ्गादिति सिचो लोपे 'आटश्च' इति ऋकारस्य वृद्धौ रपरत्वे रूपम् । नच सिज्लोपस्यासिद्धत्वादाटश्चेति वृद्धौ कृताया ह्रस्वादङ्गादिति सिज्लोपस्याप्रवृत्त्या समार्ष्टेत्येवोचितमिति वाच्यम् । 'सिज्लोप एकादेशे सिद्धो वाच्य.' इति वचनेन पूर्वं सिज्लोपे पश्चादाटश्चेति वृद्धे. प्रवृत्तिसम्भवादित्यलम् । **इयर्तेस्त्विति** ॥ श्लुविकरण ऋधातोरित्यर्थ । **मा समरतेति** ॥ 'सर्तिशास्त्यर्ति' इत्यङ् । तत्र इयर्तेर्ग्रहणादिति भाव. । 'ऋदृशोऽङि' इति गुण । **समारतेति** ॥ 'आटश्च' इति वृद्धिः । **इति चेति** ॥ इयर्तेः रूपमित्यन्वयः । तदेवमर्तिश्रुदृशिभ्य इत्यत्र अर्तिप्रपञ्चमुक्त्वा श्रुधातोरुदाहरति । **संशृणुते इति** ॥ दृशेरुदाहरति । **सम्पश्यते इति** ॥ **अकर्मकादित्येवेति** ॥ 'समो गम्यृच्छिभ्याम्' इत्यत्र अकर्मकादित्यनुवृत्तेरभ्युपगतत्वेन तत्रोपसङ्ख्यातवार्तिकेऽस्मिन् तदनुवृत्तेर्युक्तत्वादिति भाव । **अत एवेति** ॥ प्रामादिक इत्याहुरित्यन्वय. । सकर्मकत्वेनात्मनेपदासम्भवादिति भाव । **अध्याहारो वेति** ॥ इति कथयद्भ्य इत्यध्याहारो वेत्यन्वय । तथाच रक्षासीति कथयद्भ्यः पुरा सम्शृणुमहे इत्यत्र कथन एव रक्षसामन्वितत्वात् श्रुवः अकर्मकत्वादात्मनेपदान्निर्बाधमिति भाव. । **धातोरिति** ॥ धातोरर्थान्तरे वृत्तेरिति धात्वर्थेनोपसङ्ग्रहादिति प्रसिद्धेरिति अविवक्षात इति चत्वारि वाक्यानि । अकर्मिका क्रियेति सर्वत्रान्वेति । कर्मण इति तु द्वितीयादिषु **वाक्येष्व-**

वहति भारम् । नदी वहति । स्यन्दते इत्यर्थः । जीवति । नृत्यति । प्रसिद्धेर्यथा । मेघो वर्षति । कर्मणोऽविवक्षातो यथा । 'हितान्न यः संशृणुते स किंप्रभुः' । 'उपसर्गादस्यत्यूह्योर्वेति वाच्यत्' (वा ९२०) । 'अकर्मकात्' इति निवृत्तम् । बन्धं निरस्यति--निरस्यते । समूहति--समूहते ।

**२७०२ । उपसर्गाद्धस्व ऊहतेः । (७-४-२३)**

यादौ क्ङिति । ब्रह्म समुह्यात् । अग्निं समुह्य ।

**२७०३ । निसमुपविभ्यो ह्वः । (१-३-३०)**

निह्वयते ।

**२७०४ । स्पर्धायामाङः । (१-३-३१)**

कृष्णश्चाणूरमाह्वयते । 'स्पर्धायाम्' किम् । पुत्रमाह्वयति ।

**२७०५। गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः । (१-३-३२)**

---

न्वेति । **वहति भारमिति** ॥ प्रापयतीत्यर्थ । अत्र सकर्मकत्वमिति भाव. । अस्यार्थान्तरे क्वचिदकर्मकत्वमुदाहरति । **नदी वहतीति** ॥ **स्यन्दते इति** ॥ प्रस्रवतीत्यर्थ । धात्वर्थोपसङ्ग्रहे उदाहरति । **जीवतीति**। **नृत्यतीति** ॥ जीवे प्राणधारणमर्थः। नृतेस्त्वङ्गविक्षेप । उभयत्रापि कर्मणो धात्वर्थान्तर्भावान्न सकर्मकत्वामिति 'सुप आत्मन.' इति सूत्रे भाष्ये स्पष्टम् । **मेघो वर्षतीति** ॥ वर्षणकर्मणो जलस्य प्रसिद्धत्वादकर्मकत्वम् । **हितान्न यः इति** ॥ हितात्पुरुषात् य. न सशृणुते स्वहितन्न मन्यते । सः किम्प्रभुः, कुत्सित इत्यर्थ । अत्र स्वहितस्य वस्तुत. कर्मत्वेऽपि तदविवक्षया अकर्मकत्वामिति भाव । एवाञ्चास्मिन्नकर्मकाधिकारे हनि गम्यादीना सतोऽपि कर्मणः आविवक्षया अकर्मकत्व सिद्धमिति बोध्यम् । अकर्मकत्वानिर्णयोऽय 'लः कर्मणि' इत्यादौ उपयुज्यते । **उपसर्गादस्यत्यूह्योर्वेति** ॥ आत्मनेपदमिति शेष । **निवृत्तमिति** ॥ सोपसर्गयोरस्यत्यूह्योस्सकर्मकत्वनियमादिति भावः । **उपसर्गाद्धस्व ऊहतेः** ॥ यादौ क्ङिति इति शेषपूरणम् । 'अयङ् यि क्ङिति' इत्यत तदनुवृत्तेरिति भाव. । **ब्रह्म समुह्यादिति** ॥ ऊह वितर्के, सम्यग्विचारयेदित्यर्थ । अत्र आशीर्लिङि यासुट. कित्त्वेन ऊकारस्य ह्रस्व । **अग्निं समुह्येति** ॥ परितस्सम्मृज्येत्यर्थ । क्त्वादेशस्य ल्यप कित्त्वमिति भावः । **निसमुपवि** ॥ ह्वेञ कृतात्त्वस्य ह्व इति पञ्चम्यन्तम् । **निह्वयते इति** ॥ सह्वयते । उपह्वयते । विह्वयते । अकर्त्रभिप्रायार्थमिदम् । **स्पर्द्धायामाङः** । आङ्पूर्वकात् स्पर्धाविषयकात् 'ह्वेञ.' आत्मनेपदमित्यर्थ. । **कृष्णश्चाणूरमाह्वयते इति** ॥ स्पर्द्धार्थमाकारयतीत्यर्थः । **गन्धनावक्षेपण** ॥ आत्मनेपदम् अकर्त्रभिप्रायेऽपीति शेषः । **गन्धनं हिं-**

गन्धनं हिंसा । उत्कुरुते । सूचयतीत्यर्थः । सूचनं हि प्राणवियोगानुकूलत्वाद्धिंसैव । अवक्षेपणं भर्त्सनम् । श्येनो वर्तिकामुदाकुरुते । भर्त्सयतीत्यर्थः । हरिमुपकुरुते । सेवते । परदारान्प्रकुरुते । तेषु सहसा प्रवर्तते । एधोदकस्योपस्कुरुते । गुणमाधत्ते । गाथाः प्रकुरुते । प्रकथयति । शतं प्रकुरुते । धर्मार्थे विनियुङ्क्ते । 'एषु' किम् । कटं करोति ।

## २७०६ । अधेः प्रसहने । (१-३-३३)

प्रसहनं क्षमाभिभवश्च । 'षह मर्षणेऽभिभवे च' इति पाठात् । शत्रुमधिकुरुते । क्षमते इत्यर्थः । अभिभवतीति वा ।

## २७०७ । वेः शब्दकर्मणः । (१-३-३४)

स्वरान्विकुरुते । उच्चारयतीत्यर्थः । 'शब्दकर्मणः' किम् । चित्तं विकरोति कामः ।

## २७०८ । अकर्मकाच्च । (१-३-३५)

'वेः कृञः' इत्येव । छात्राः विकुर्वते । विकारं लभन्ते ।

**सेति** ॥ गन्ध अर्दने । अर्द हिंसायामित्युक्तेरिति भाव. । **सूचयतीति** ॥ परदोषमाविष्करोतीत्यर्थः । नन्वेव सति कथमस्य गन्धने वृत्ति. । हिंसायाः असत्त्वादित्यत आह । **सूचनं हीति** ॥ **श्येनो वर्तिकामिति** ॥ वर्तिका शकुनिविशेष । साहसिक्ये उदाहरति । **परदारान् प्रकुरुते इति** ॥ साहसप्रवृत्तिविषयीकरोतीत्यर्थ । सहसा वर्तते साहसिक । 'ओजस्सहोऽम्भसा वर्तते' इति ठक् । तस्य कर्म असमीक्ष्यकरण साहसिक्यम् । तदाह । **तेषु सहसा प्रवर्तते इति** ॥ फलितार्थकथनमिदम् । साहसप्रवृत्तिमात्रार्थकत्वे द्वितीयानुपपत्ते । अतः साहसप्रवृत्तिविषयीकरणपर्यन्तानुधावनमिति बोध्यम् । प्रतियत्ने उदाहरति । **एधोदकस्योपस्कुरुते इति** ॥ एधशब्द. अदन्तः 'अवोदैधौद्मप्रश्रथहिमश्रथाः' इति सूत्रे निपातित । एधश्च उदकञ्चेति समाहारद्वन्द्वः । यद्वा एधस्शब्दस्सकारान्तो नपुंसकलिङ्गः । एधश्च दकञ्चेति विग्रहः दकशब्द उदकवाची प्रोक्त प्राज्ञैः । 'जीवनममृतञ्जीवनीय दकञ्च' इति हलायुधः । 'काष्ठन्दार्विन्धनन्त्वेध इध्ममेधस्समित् स्त्रियाम्' इत्यमर. । प्रतियत्नो गुणाधानमित्यभिप्रेत्य आह । **गुणमाधत्ते इति** ॥ काष्ठस्य शोषणादिगुणाधानं । दकस्य तु गन्धद्रव्यसम्पर्कजनितगन्धाधानम् । **अधेः प्रसहने** ॥ अधे परस्मात् कृञ प्रसहनवृत्तेरात्मनेपदमित्यर्थ । **वेः शब्दकर्मणः** ॥ शब्द. कर्मकारक यस्य तस्मात् कृञो विपूर्वादात्मनेपदमित्यर्थः । **अकर्मकाच्च** ॥ **वेः कृञ इत्येवेति** ॥ तथाच अकर्मकात् विपूर्वात् कृञ आत्मनेपदमित्यर्थः । विकुर्वते इत्येतद्व्याचष्टे । **विकारं लभन्ते इति** ॥ लाभे विकारस्य कर्मत्वेऽपि धात्वर्थोपसङ्ग्र-

## २७०९ । सम्माननोत्सञ्जनाचार्यकरणज्ञानभृ-तिविगणनव्ययेषु नियः । (१-३-३६)

अत्रोत्सञ्जनज्ञानविगणनव्यया: नयतेर्वाच्या: । इतरे प्रयोगोपाधय: । तथा हि शास्त्रे नयते । शास्त्रस्थं सिद्धान्तं शिष्येभ्य: प्रापयतीत्यर्थ: । तेन च शिष्यसम्माननं फलितम् । उत्सञ्जने । दण्डमुन्नयते । उत्क्षिपतीत्यर्थ: । माणवकमुपनयते । विधिना आत्मसमीपं प्रापयतीत्यर्थ: । उपनयनपूर्वकेणाध्यापनेन हि उपनेतरि आचार्यत्वं क्रियते । ज्ञाने । तत्वं नयते । निश्चिनोतीत्यर्थ: । कर्मकरानुपनयते । भृतिदानेन स्वसमीपं प्रापयतीत्यर्थ: । विगणनमृणादेर्निर्यातनम् । करं विनयते । राज्ञे देयं भागं परिशोधयतीत्यर्थ: । शतं विनयते । धर्मार्थं विनियुङ्क्ते इत्यर्थ: ।

---

हादकर्मकत्वम् । **सम्माननोत्सञ्जन** ॥ एषु गम्येषु णीञ्धातोरात्मनेपदमित्यर्थः । परगामिन्यपि फले आत्मनेपदार्थमिदम् । **इतरे इति** ॥ सम्माननाचार्यकरणभृतयः इत्यर्थः । **प्रयोगोपाधयः इति** ॥ वाच्यत्वाभावेऽपि आर्थिका सत्तामात्रेण शब्दप्रयोगे निमित्तभूता इत्यर्थः । आत्मनेपदद्योत्या इति यावत् । तदेवोपपादयितु प्रतिजानीते । **तथाहीति** ॥ सम्माननने उदाहरति । **शास्त्रे नयते इति** ॥ अत्र णीञ् प्रापणार्थक । सिद्धान्तमित्यध्याहार्यम् । सिद्धान्तम्प्रत्याधिकरणत्वात् शास्त्रे इति सप्तमी । तदाह । **शास्त्रस्थमिति** ॥ **तेनेति** ॥ सिद्धान्तप्रापणेनेत्यर्थः । **फलितमिति** ॥ अर्थादिति भाव । **उत्सञ्जने इति** ॥ उदाह्रियते इति शेषः । उत्सञ्जनमुत्क्षेप । **उत्क्षिपतीत्यर्थः इति** ॥ धातूनामनेकार्थत्वादिति भावः । आचार्यकरणे उदाहरति । **माणवकमुपनयते इति** ॥ उपपूर्वो णीञ् समीपप्रापणार्थकः । सामीप्यञ्च प्रत्यासत्त्या प्रापयितृपेक्षमेव । तच्च माणवकीयमात्मसमीपप्रापण वैधमेव विवक्षितम् । पूर्वोत्तराङ्गकलापाम्नानसामर्थ्यात् । तदाह । **विधिना आत्मसमीपं प्रापयतीति** ॥ तत्राचार्यकरणस्यार्थिकत्वमुपपादयति । **उपनयनपूर्वकेणेति** ॥ माणवकमुपनयीत तमध्यापयीतेत्यध्यापनार्थत्वमुपनयनस्यावगतम् । अध्यापनादाचार्यत्व सम्पद्यते । 'उपनीय तु यश्शिष्य वेदमध्यापयेत्तु यः । सकल्पं सरहस्यञ्च तमाचार्य प्रचक्षते ।' इपि स्मरणात् । तथा च आचार्यकरणमुपनयसाध्यत्वादार्थिकमिति भावः । **ज्ञाने इति** ॥ उदाह्रियते इति शेषः । **निश्चिनोतीत्यर्थः इति** ॥ नयतिर्निश्चयार्थक इति भाव. । भृतौ उदाहरति । **कर्मकरानुपनयते इति** ॥ भृतिः वेतन तदर्थङ्कर्म करोतीति कर्मकर. । 'कर्मणि भृतौ' इति टप्रत्ययः । कर्मण्युपपदे कृञः टः स्यात्कर्तरीति तदर्थ । उपपूर्वको णीञ् समीपप्रापणार्थकः । समीपप्रापणञ्च भृत्यर्थमिति कर्मकरशब्दसमभिव्याहाराद्गम्यते । फलितमाह । **भृतिदानेनेति** ॥ **ऋणादेरिति** ॥ आदिना करादिसङ्ग्रह. । निर्यातन प्रत्यर्पणादि । **करं विनयते इति** ॥ राज्ञो देयो भागः करः । विपूर्वो णीञ् परिशोधनार्थक. । तदाह । **राज्ञे देयं भागं परिशोधयतीति** ॥ परिगणयति

## २७१० । कर्तृस्थे चाशरीरे कर्मणि । (१-३-३७)

नियः कर्तृस्थे कर्मणि यदात्मनेपदं प्राप्तं तच्छरीरावयवभिन्न एव स्यात् । सूत्रे शरीरशब्देन तदवयवो लक्ष्यते । क्रोधं विनयते । अपगमयति । तत्फलस्य चित्तप्रसादस्य कर्तृगत्वात् 'स्वरितञितः—' (सू २१५८) इत्येव सिद्धे नियमार्थमिदम् । तेनेह न । गडुं विनयति । कथं तर्हि 'विगणय्य नयन्ति पौरुषम्' इति । कर्तृगामित्वाविवक्षायां भविष्यति ।

## २७११ । वृत्तिसर्गतायनेषु क्रमः । (१-३-३८)

वृत्तिरप्रतिबन्धः । ऋचि क्रमते बुद्धिः । न प्रतिहन्यते इत्यर्थः । सर्ग उत्साहः । अध्ययनाय क्रमते । उत्सहते । क्रमन्तेऽस्मिन शास्त्राणि । स्फीतानि भवन्तीत्यर्थः ।

## २७१२ । उपपराभ्याम् । (१-३-३९)

वृत्त्यादिष्वाभ्यामेव क्रमेर्न तूपसर्गान्तरपूर्वात् । उपक्रमते । पराक्रमते । नेह संक्रामति ।

दातुमित्यर्थः । व्यये उदाहरति । **शतं विनयते धर्मार्थमिति** ॥ अत्र विपूर्वो णीञ् व्ययार्थकः । तदाह । **विनियुङ्क्ते इत्यर्थः इति** ॥ **कर्तृस्थे** ॥ **नियः इति** ॥ कर्मकारके कर्तृस्थे सति णीञ्धातोर्यदात्मनेपदङ्कर्तृगेऽपि फले ञित्त्वात् प्राप्तं तत् शरीरावयवभिन्न एव सति कर्मकारके स्यात् । कर्मणः शरीरावयवत्वे तु कर्तृगेऽपि फले परस्मैपदमेवेत्यर्थः । ननु सूत्रे शरीरग्रहणात् कथ शरीरावयवेत्युक्तमित्यत आह । **सूत्रे इति** ॥ शरीरतादात्म्यापन्नस्यैव कर्तृतया शरीरस्य कर्तृस्थत्वन्न सम्भवति । शरीरावयवानान्तु समवायेन आधारतया तत्सम्भवतीति भावः । ननु क्रोधापगमस्य क्रोधविषयशत्रुगतानिष्टपरिहारफलकत्वात् ञित्त्वेऽप्यात्मनेपदाप्राप्तेस्तद्विध्यर्थत्वात्कथमुक्तनियमार्थत्वमस्य सूत्रस्येत्यत आह । **तत्फलस्येत्यादि** ॥ **गडुं विनयतीति** ॥ कर्मणो गडोः शरीरावयवत्वान्नात्मनेपदमित्यर्थ. । **कथं तर्हीति** ॥ पौरुषस्य कर्मणः शरीरावयवभिन्नतया आत्मनेपदप्रसङ्गादिति भावः । **कर्तृगामित्वेति** ॥ कर्तृस्थे कर्मणि नियः कर्तृगे फले ञित्त्वात् प्राप्तमात्मनेपदं शरीरावयवभिन्न एवेति नियम्यते, नतु विधीयते । अत्र तु फलस्य कर्तृगामित्वं सदपि न विवक्षितम् अतो नात्मनेपदमिति भावः । **वृत्तिसर्ग** ॥ आत्मनेपदमिति शेषः । तायने उदाहरति । **क्रमन्तेऽस्मिन्निति** ॥ तायन वृद्धिः । तदाह । **स्फीतानीति** ॥ **उपपराभ्याम्** ॥ 'वृत्तिसर्गतायनेषु क्रमः' इत्यनुवर्तते । तेनैव सिद्धे नियमार्थमिदम् । तदाह । **आभ्यामेव क्रमेरिति** ॥ आत्मनेपदमिति शेषः ।

## २७१३ । आङ उद्गमने । (१-३-४०)

आक्रमते सूर्यः । उदयते इत्यर्थः । 'ज्योतिरुद्गमने इति वाच्यम्' (वा ९२१) । नेह । आक्रामति धूमो हर्म्यतलात् ।

## २७१४ । वेः पादविहरणे । (१-३-४१)

साधु विक्रमते वाजी । 'पादविहरणे' किम् । विक्रामति सन्धिः । द्विधा भवति । स्फुटतीत्यर्थः ।

## २७१५ । प्रोपाभ्यां समर्थाभ्याम् । (१-३-४२)

समर्थौ तुल्यार्थौ । शकन्ध्वादित्वात्पररूपम् । प्रारम्भेऽनयोस्तुल्यार्थता । प्रक्रमते । उपक्रमते । 'समर्थाभ्याम्' किम् । प्रक्रामति । गच्छतीत्यर्थः । उपक्रामति । आगच्छतीत्यर्थः ।

## २७१६ । अनुपसर्गाद्वा । (१-३-४३)

क्रामति—क्रमते । अप्राप्तविभाषेयम् । वृत्त्यादौ तु नित्यमेव ।

## २७१७ । अपह्नवे ज्ञः । (१-३-४४)

शतमपजानीते । अपलपतीत्यर्थः ।

## २७१८ । अकर्मकाच्च । (१-३-४५)

---

**आङ उद्गमने** ॥ आङ॰ परस्मादुद्गमनवृत्तेः क्रमः आत्मनेपदमित्यर्थ । **आक्रमते सूर्यः इति** ॥ आङ्पूर्व. क्रमिरुद्गमनार्थक.। तदाह। **उदयते इत्यर्थः इति** ॥ उपसर्गवशादिति भावः। **वेः पादविहरणे** ॥ पादविहरण पादविक्षेपः। तद्वृत्तेर्विपूर्वात् क्रमेरात्मनेपदमित्यर्थ । **साधु विक्रमते वाजीति** ॥ सम्यक्पदानि विक्षिपतीत्यर्थ॰ । **प्रोपाभ्यां** ॥ क्रम आत्मनेपदमिति शेषः। समौ अर्थौ ययोरिति विग्रह इत्याह। **समर्थौ तुल्यार्थाविति** ॥ सवर्णदीर्घमाशङ्क्य आह। **शकन्ध्वादित्वादिति**॥ ननु प्रक्रमते इत्यत्र अतिशयितपदविक्षेपार्थप्रतीतेः उपक्रमते इत्यत्र समीपे पदानि विक्षिपतीति प्रतीते॰ कथमनयोस्तुल्यार्थकत्वमित्यत आह । **प्रारम्भेऽनयोस्तुल्यार्थतेति** ॥ तथाच आरम्भार्थकाभ्यामिति फलितमिति भावः। **अनुपसर्गाद्वा** ॥ क्रम आत्मनेपदमिति शेष॰। **अप्राप्तविभाषेयमिति** ॥ अनुपसर्गात् क्रमे आत्मनेपदस्य कदाप्यप्राप्तेरिति भावः। **वृत्त्यादाविति** ॥ वृत्तिसर्गतायनेषु तु पूर्वविप्रतिषेधान्नित्यमेवेत्यर्थः। **अपह्नवे ज्ञः** ॥ अपह्नवः अपलाप. । तद्वृत्तेर्ज्ञाधातोरात्मनेपदमित्यर्थः। **अकर्मकाच्च** ॥ ज्ञः आत्मनेपदमिति शेषः। **सर्पिषो जानीते इति** ॥ अत्र ज्ञा-

सर्पिषो जानीते। सर्पिषोपायेन प्रवर्तते इत्यर्थः।

## २७१९। संप्रतिभ्यामनाध्याने। (१-३-४६)

शतं सञ्जानीते। अवेक्षते इत्यर्थः। शतं प्रतिजानीते। 'अङ्गीकरोतीत्यर्थः। 'अनाध्याने' इति योगो विभज्यते। तत्सामर्थ्यात् अकर्मकाच्च' (सू २७१८) इति प्राप्तिरपि बाध्यते। मातरं मातुर्वा सञ्जानाति। कर्मणः शेषत्वविवक्षाया षष्ठी।

## २७२०। भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः। (१-३-४७)

उपसम्भाषोपमन्त्रणे धातोर्वाच्ये, इतरे प्रयोगोपाधयः। शास्त्रे वदते।

---

धातु प्रवृत्तौ वर्तते। 'ज्ञोऽविदर्थस्य करणे' इति तृतीयार्थे षष्ठी। तदाह। **सर्पिषोपायेन प्रवर्तते इति**॥ 'अनुपसर्गात् ज्ञ' इति वक्ष्यमाणेनैव सिद्धे सोपसर्गार्थमिदम्। सर्पिषोऽनुजानीते। **सम्प्रतिभ्यामनाध्याने**॥ ज्ञः आत्मनेपदमिति शेष। **अवेक्षते इत्यर्थः इति**॥ अकर्मकत्वाभावात् पूर्वेणाप्राप्तिरिति भावः। अनाध्याने किम्। मातर सञ्जानाति। आध्यायतीत्यर्थ। उत्कण्ठापूर्वक स्मरणमाध्यानम्। ननु यदा आध्याने कर्मणश्शेषत्वविवक्षया षष्ठीमाश्रित्य मातुस्सञ्जानाति इति प्रयुज्यते तदा सम्पूर्वो जानातिरयमकर्मक इति स्थिति। 'सम्प्रतिभ्यामनाध्याने' इत्यात्मनेपदस्याप्रवृत्तावपि 'अकर्मकाच्च' इति सूत्रेणात्मनेपद दुर्वारम्। तत्र अनाध्याने इत्यभावात् सम्प्रतिभ्यामित्यत्र अनाध्यानग्रहणस्य मातर सञ्जानातीति सकर्मके चरितार्थत्वादित्यत आह। **अनाध्याने इति योगो विभज्यते इति**॥ ततश्च 'सम्प्रतिभ्याम्' इत्येको योगः। सम्प्रतिपूर्वात् ज्ञ. आत्मनेपदमित्यर्थ.। 'अनाध्याने' इति योगान्तरम्। अनाध्याने सम्प्रतिभ्यामात्मनेपदमित्यर्थः। ततः किमित्यत आह। **अकर्मकाच्चेति प्राप्तिरपि बाध्यते इति**॥ ननु अनन्तरस्येऽति न्यायेन सम्प्रतिभ्यामित्यस्यैव बाधो युक्त इत्यत आह। **तत्सामर्थ्यादिति**॥ एकसूत्रत्वेनैव सिद्धे अनाध्याने इति योगविभागाद्व्यवहितस्यापि बाध इत्यर्थ.। ननु मातर मातुर्वा सञ्जानाति इत्यत्र मातुः कर्मत्वात् द्वितीयैव युक्तेत्यत आह। **कर्मणः शेषत्वविवक्षायां षष्ठीति**॥ नचैवमपि 'अधीगर्थदयेशा कर्मणि' इति षष्ठ्येव स्यान्नतु द्वितीयेति वाच्यम्। तत्र शेष इत्यनुवर्त्य कर्मण. शेषत्वविवक्षाया षष्ठी, कर्मत्वविवक्षायान्तु द्वितीयेत्यभ्युपगमात्। नचैव सति 'षष्ठी शेषे' इत्यनेनैव सिद्धत्वात् 'अधीगर्थ' इति व्यर्थमिति वाच्यम्। मातु स्मरणमित्यादौ शेषषष्ठ्यास्समासाभावार्थत्वादिति कारकाधिकारे प्रपञ्चितम्। **भासनोपसम्भाषा**॥ आत्मनेपदमिति शेषः। **इतरे इति**॥ भासनज्ञानादय इत्यर्थ। **प्रयोगोपाधयः इति**॥ 'सम्माननोत्सञ्जन' इत्यत्र व्याख्यातं प्राक्। भासनन्तु तत्तदाक्षेपेषु समाधानाय नवनवयुक्त्युल्लेख। **शास्त्रे वदते**

भासमानो ब्रवीतीत्यर्थः । उपसम्भाषा उपसान्त्वनम् । भृत्यानुपवदते । सान्त्वयतीत्यर्थः । ज्ञाने शास्त्रे वदते । यत्ने क्षेत्रे वदते । विमतौ क्षेत्रे विवदन्ते । उपमन्त्रणमुपच्छन्दनम् । उपवदते । प्रार्थयते इत्यर्थः ।

### २७२१ । व्यक्तवाचां समुच्चारणे । (१-३-४८)

मनुष्यादीनां सम्भूयोच्चारणे वदेरात्मनेपदं स्यात् । सम्प्रवदन्ते ब्राह्मणाः । नेह सम्प्रवदन्ति खगाः ।

### २७२२ । अनोरकर्मकात् । (१-३-४९)

व्यक्तवाग्विषयादनुपूर्वादकर्मकाद्वदेरात्मनेपदं स्यात् । अनुवदते कठः कलापस्य । 'अकर्मकात्' किम् । उक्तमनुवदति । 'व्यक्तवाचाम्' किम् । अनुवदति वीणा ।

### २७२३ । विभाषा विप्रलापे । (१-३-५०)

विरुद्धोक्तिरूपे व्यक्तवाचां समुच्चारणे उक्तं वा स्यात् । विप्रवदन्ते—विप्रवदन्ति वा वैद्याः ।

### २७२४ । अवाद्ग्रः । (१-३-५१)

---

**इति** ॥ विषयसप्तम्येषा । **भासमानः इति** ॥ नवनवयुक्तीरुल्लिखतीत्यर्थ । शास्त्रे वदते इति विषयसप्तमी । व्यवहरतीत्यर्थः । व्यवहारश्च ज्ञान विना न सम्भवतीति ज्ञानमार्थिकम् । ज्ञात्वा व्यवहरतीति फलितम् । **क्षेत्रे विवदन्ते इति** ॥ विरुद्ध व्यवहरन्तीत्यर्थः । विरुद्धव्यवहारश्च वैमत्यमूलक इति विमतिरार्थिकी । **उपवदते इति** ॥ उपपूर्वस्य वदे प्रार्थनमर्थ । तदाह । **प्रार्थयते इत्यर्थः इति** ॥ **व्यक्तवाचाम्** ॥ व्यक्ता अज्झलभेदेन स्पष्टोच्चारिताः वाचः शब्दाः येषामिति विग्रहः । समित्येकीभावे । तदाह । **मनुष्यादीनामिति** ॥ **सम्प्रवदन्ते ब्राह्मणाः इति** ॥ सम्भूयोच्चारयन्तीत्यर्थ । **अनोरकर्मकात्** ॥ व्यक्तवाचामित्यनुवृत्त विषयषष्ठ्यन्तमाश्रीयते । समुच्चारणे इति निवृत्तम् । तदाह । **व्यक्तवाग्विषयादिति** ॥ मनुष्यकर्तृकादित्यर्थ. । **अनुवदते इति** ॥ अनु. सादृश्ये । 'तुल्यार्थैरतुलोपमाभ्याम्' इति षष्ठी । कठ. कलापेन तुल्य वदतीत्यर्थः । वस्तुतस्तु शेषषष्ठीत्येवोचितम् । 'तुल्यार्थैः' इत्यत्र अतुलोपमाभ्यामिति पर्युदासेन अनव्ययानामेव तुल्यार्थानाङ्ग्रहणात् । अन्यथा चन्द्र इव मुखमित्यादावपि तृतीयाषष्ठ्योरापत्तेरित्यलम् । **विभाषा विप्रलापे** ॥ 'व्यक्तवाचां समुच्चारणे' इत्यनुवर्तते । विरुद्धोक्तिर्विप्रलापः । तदाह । **विरुद्धोक्तिरूपे इति** ॥ **अवाद्ग्रः** ॥ आत्मनेपदमिति शेष । गॄ इत्यस्य ग्र इति पञ्चमी । प्रकृतिवदनुकरणमित्यस्यानित्यत्वात् 'ॠत इद्धातो.' इति न भवति ।

अवगिरते । 'गृणातिस्त्ववपूर्वो न प्रयुज्यत एव' इति भाष्यम् ।

## २७२५ । समः प्रतिज्ञाने । (१-३-५२)

शब्दं नित्यं सङ्गिरते । प्रतिजानीते इत्यर्थः । 'प्रतिज्ञाने' किम् । सङ्गिरति ग्रासम् ।

## २७२६ । उदश्चरः सकर्मकात् । (१-३-५३)

धर्ममुच्चरते । उल्लङ्घ्य गच्छतीत्यर्थः 'सकर्मकात्' किम् । बाष्पमुच्चरति । उपरिष्टाद्गच्छतीत्यर्थः ।

## २७२७ । समस्तृतीयायुक्तात् । (१-३-५४)

रथेन सञ्चरते ।

## २७२८ । दाणश्च सा चेच्चतुर्थ्यर्थे । (१-३-५५)

सम्पूर्वाद्दाणस्तृतीयान्तेन युक्तादुक्तं स्यात् सा च तृतीया चेच्चतुर्थ्यर्थे । दास्या संयच्छते । पूर्वसूत्रे 'समः' इति षष्ठी । तेन सूत्रद्वयमिदं व्यवहितेऽपि प्रवर्तते । रथेन समुदाचरते । दास्या संप्रयच्छते ।

तदनित्यत्वे इदमेव मानम् । **अवगिरते इति** ॥ शविकरणोऽयम् । अवगृणातीत्यत्राप्यात्मनेपदमाशङ्क्य आह । **गृणातिस्त्विति** ॥ एवञ्च तुदादेरेव ग्रहणमिति भावः । **समः प्रतिज्ञाने** ॥ गिरतेरात्मनेपदमित्यर्थः । प्रतिज्ञानम् अभ्युपगमः । **सङ्गिरति ग्रासमिति** ॥ भक्षयतीत्यर्थ ॥ **उदश्चरः** ॥ उत्पूर्वाच्चरधातोस्सकर्मकादात्मनेपदमित्यर्थः । **समस्तृतीया** ॥ सकर्मकादिति निवृत्तम् । सम्पूर्वात् तृतीयान्तसमभिव्याहृताच्चरेरात्मनेपदमित्यर्थः । तृतीयायुक्तादिति किम् । रथिकाः सञ्चरन्ति । अत्र यद्यपि रथेनेत्यर्थाद्गम्यते । तथापि तृतीयान्तश्रवणाभावान्नात्मनेपदम् । एतदर्थमेव योगग्रहणम् । अन्यथा तृतीययेत्यवक्ष्यत् । सकर्मकादप्येतदात्मनेपदम्भवति । अविशेषात् । अत एव तृतीयायुक्तादिति किम् । 'उभौ लोकौ सञ्चरसीमञ्चामुञ्च लोकम्' इति भाष्य सङ्गच्छते । **दाणश्च सा** ॥ 'समस्तृतीयायुक्तात्' इत्यनुवर्त्तते । तदाह । **सम्पूर्वादिति** ॥ **उक्तं स्यादिति** ॥ आत्मनेपदमित्यर्थ. । **सा चेदिति** ॥ तच्छब्देन तृतीया परामृश्यते । तदाह । **तृतीया चेदिति** ॥ **दास्या संयच्छते इति** ॥ अशिष्टव्यवहारे दाण. प्रयोगे चतुर्थ्यर्थे तृतीया वाच्येति तृतीया । ननु रथेन समुदाचरते इत्यत्र 'समस्तृतीयायुक्तात्' इति पूर्वसूत्रस्य न प्रवृत्तिः । आङा व्यवहितत्वेन सम्पूर्वत्वाभावात् 'तस्मादित्युत्तरस्य' इति परिभाषया सम इति पञ्चम्या. चरे. अव्यवहितपरत्वलाभात् । तथा दास्यां सम्प्रयच्छते इत्यत्रापि 'दाणश्च सा चेत्' इति कथम्प्रवर्तते । प्रशब्देन व्यवधानादित्यत आह । **पूर्वसूत्रे समः इति षष्ठीति** ॥ तथाच षष्ठ्या पौर्वापर्यमेव गम्यते ।

## २७२९ । उपाद्यमः स्वकरणे । (१-३-५६)

स्वकरणं स्वीकारः । भार्यामुपयच्छते ।

## २७३० । विभाषोपयमने । (१-२-१६)

यमः सिच्किद्वा स्याद्विवाहे । रामः सीतामुपायत—उपायंस्त वा । उदवोढेत्यर्थः । गन्धनाङ्गे उपयमे तु पूर्वविप्रतिषेधान्नित्यं किस्त्वम् ।

## २७३१ । ज्ञाश्रुस्मृदृशां सनः । (१-३-५७)

सन्नन्तानामेषां प्राग्वत् । धर्मं जिज्ञासते । शुश्रूषते । सुस्मूर्षते । दिदृक्षते ।

## २७३२ । नानोर्ज्ञः । (१-३-५८)

---

न त्वव्यवहितत्वमिति भाव । **तेनेति** ॥ षष्ठ्याश्रयणेनेत्यर्थ । **सूत्रद्वयमिति** ॥ 'समस्तृतीयायुक्तात्' इति पूर्वसूत्रस्थस्य पष्ठ्यन्तस्यैव 'दाणश्च' इति सूत्रेऽप्यनुवृत्तेरिति भाव । **उपाद्यमः** ॥ आत्मनेपदमिति शेषः । ननु स्व वस्त्रमुत्पादयतीत्यर्थे वस्त्रमुपयच्छतीत्यत्राप्यात्मनेपद स्यादित्यत आह । **स्वकरणं स्वीकारः इति** ॥ अस्वस्य सत स्वत्वेन परिग्रह स्वकरणशब्देन विवक्षित इत्यर्थ । च्विप्रत्ययस्तु वैकल्पिक । 'समर्थाना प्रथमाद्वा' इत्युक्तेरिति भाष्ये स्पष्टम् । **भार्यामुपयच्छते इति** ॥ अन्यदीयाङ्कन्याम्भार्यात्वेन परिगृह्णातीत्यर्थः । **विभाषोपयमने** ॥ 'यमो गन्धने' इत्यतो यम इति 'हनस्सिच्' इत्यतस्सिजिति 'असयोगात्' इत्यत किदिति चानुवर्तते । तदाह । **यमः सिच्किद्वा स्याद्विवाहे इति** ॥ उपयमशब्दो विवाहे वर्तते इति भाव । **रामः सीतामुपायतेति** ॥ भार्यात्वेन स्वीकृतवानित्यर्थः । सिचः कित्त्वपक्षे 'अनुदात्तोपदेश' इति मकारलोपे 'ह्रस्वादङ्गात्' इति सिचो लोपः । **उदवोढेति** ॥ भार्यात्वेन परिग्रहः उद्वाहः । **गन्धनाङ्गे उपयमे त्विति** ॥ हिसापूर्वके विवाहे त्वित्यर्थः । राक्षसविवाहे त्विति यावत् । 'हत्वा भित्वा च शीर्षाणि रुदती रुदतो हरेत् । स राक्षसो विवाहः' इति स्मृते. । **नित्यङ्कित्त्वमिति** ॥ 'यमोऽगन्धने' इति पूर्वसूत्रेणेति शेष. । यदि गन्धनाङ्गकेऽप्युपयमने परत्वादिय विभाषा स्यात् तर्हि एषा प्राप्तविभाषा स्यात् । 'ततश्च 'नवेति विभाषा' इत्यत्र भाष्ये अप्राप्तविभाषासु अस्या परिगणन विरुध्येत । अत पूर्वविप्रतिषेध आश्रयणीय इति भाव । **ज्ञाश्रु** ॥ **प्राग्वदिति** ॥ आत्मनेपदमित्यर्थः । यद्यपि 'अपह्नवे ज्ञः अकर्मकाच्च, सम्प्रतिभ्यामनाध्याने' इति सूत्रे 'अर्तिश्रुदृशिभ्यश्च' इति वार्तिकेन च ज्ञादिभ्यः आत्मनेपदे कृते 'पूर्ववत्सन' इत्यात्मनेपद सिद्धम् । तथाप्यपह्नवाद्यभावेऽप्यात्मनेपदार्थं ज्ञाश्रुदृशीनामिह ग्रहणमिति मत्वोदाहरति । **धर्मं जिज्ञासते इति** ॥ ज्ञातुमिच्छतीत्यर्थः । **शुश्रूषते इति** ॥ 'अज्झनगमां सनि' इति दीर्घ. । 'इको झल्' इति सनः कित्त्वम् । 'श्रयुकः किति' इति इण्णिषेध । **सुस्मूर्षते इति** ॥ स्मृधातोस्सनि 'अज्झन' इति दीर्घे 'उदोष्ठ्यपूर्वस्य' इत्युत्त्वे रपरत्वे 'हलि च' इति दीर्घः । **नानोर्ज्ञः** ॥ अनुपू-

पुत्रमनुजिज्ञासति। पूर्वसूत्रस्यैवायं निषेधः। 'अनन्तरस्य–' (प ६२) इति न्यायात्। तेनेह न। सर्पिषोऽनुजिज्ञासते। सर्पिषा प्रवर्तितुमिच्छतीत्यर्थः। 'पूर्ववत्सनः' (सू २७३४) इति तङ्। 'अकर्मकाच्च' (सू २७१८) इति केवलाद्विधानात्।

## २७३३। प्रत्याङ्भ्यां श्रुवः। (१-३-५९)

आभ्यां सन्नन्ताच्छ्रुव उक्तं न स्यात्। प्रतिशुश्रूषति। आशुश्रूषति। कर्मप्रवचनीयात्स्यादेव। देवदत्तं प्रति शुश्रूषते। 'शदेः शितः' (सू २३६२) 'म्रियतेर्लुङ्लिङोश्च' (सू २५३८) व्याख्यातम्।

## २७३४। पूर्ववत्सनः। (१-३-६२)

सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात्। एदिधिषते शिशयिषते। निविविक्षते। 'पूर्ववत्' किम्। बुभूषति। 'शदेः—' (सू २३६२) (सू २५३८) इत्यादिसूत्रद्वये 'सनो न' इत्यनुवर्त्य वाक्यभेदेन व्याख्येयम्। तेनेह न। शिशत्सति। मुमूर्षति। 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य (सू २२४०) एधांचक्रे।

र्वात् ज्ञाधातोस्सन्नन्तात् नात्मनेपदमित्यर्थः। **पुत्त्रमनुजिज्ञासतीति**॥ अनुज्ञातुमिच्छतीत्यर्थः। ननु सर्पिषा प्रवर्तितुमिच्छतीत्यर्थे सर्पिषोऽनुजिज्ञासते इत्यत्रापि 'अपह्नवे ज्ञ, अकर्मकाच्च' इत्यात्मनेपदस्याप्यनेन निषेधे सति सन्नन्तात्परस्मैपदमेव स्यादित्यत आह। **पूर्वसूत्रस्यैवेति**॥ एवञ्च सर्पिषोऽनुजिज्ञासते इत्यत्र 'अकर्मकाच्च' इत्यात्मनेपदान्निर्बाधमिति भाव.। ननु 'अकर्मकाच्च' इति ज्ञाधातोरात्मनेपदे सन्नन्तात्कथमात्मनेपदलाभ इत्यत आह। **पूर्ववदिति**॥ केवलात् सन्विहीनात् ज्ञाधातोरात्मनेपदविधानात् सन्नन्तादपि तस्मात् 'पूर्ववत्सनः' इत्यात्मनेपदमित्यर्थ·। **प्रत्याङ्भ्यां श्रुवः**॥ **उक्तं नेति**॥ आत्मनेपदन्नेत्यर्थ.। प्रत्याडाविहोपसर्गावेव गृह्येते। व्याख्यानात्। तदाह। **कर्मप्रवचनीयात्स्यादेवेति**॥ आत्मनेपदमिति शेषः। **देवदत्तं प्रतीति**॥ 'लक्षणेत्थम्भूत' इति प्रतिः कर्मप्रवचनीयः। **पूर्ववत्सनः**॥ पूर्वेणेव पूर्ववत्। तेन तुल्यमिति तृतीयान्ताद्वतिः। पूर्वशब्देन सन्प्रकृतिर्विवक्षिता। तदाह। **सनः पूर्वः इत्यादि**॥ **एदिधिषते इति**॥ सन्प्रकृतेरेव धातोरात्मनेपदित्वात्तत्प्रकृतिकसन्नन्तादात्मनेपदम्। 'नेर्विशः' इत्यात्मनेपदविधानात्तत्प्रकृतिकसन्नन्तादपि आत्मनेपदम्। ननु 'शदे· शित·' 'म्रियतेर्लुङ्लिङोश्च' इत्यात्मनेपदविधानात् शिशत्सति मुमूर्षति इत्यत्रापि सन्नन्तादात्मनेपदं स्यादित्यत आह। **शदेरित्यादीति**॥ आदिना म्रियतेः 'लुङ्लिङोश्च' इत्यस्य ग्रहणम्। शदेरित्यादिसूत्रद्वये 'पूर्ववत्सन·' इति 'नानोर्ज्ञ.' इत्यतो नेति चानुवर्त्य शदेर्म्रियतेश्च सन्नन्तान्नात्मनेपदमिति व्याख्येयमित्यर्थः। नन्वेव सति शीयते

## २७३५ । प्रोपाभ्यां युजेरयज्ञपात्रेषु । (१-३-६४)

प्रयुङ्क्ते । उपयुङ्क्ते । 'स्वराद्यन्तोपसर्गादिति वक्तव्यम्' (वा ९३९) । उद्युङ्क्ते । नियुङ्क्ते । 'अयज्ञपात्रेषु' किम् । द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति ।

## २७३६ । समः क्ष्णुवः । (१-३-६५)

संक्ष्णुते शस्त्रम् ।

## २७३७ । भुजोऽनवने । (१-३-६६)

ओदनं भुङ्क्ते । अभ्यवहरतीत्यर्थः । 'बुभुजे पृथिवीपालः पृथिवीमेव केवलाम्' । 'वृद्धो जनो दुःखशतानि भुङ्क्ते' । इह उपभोगो भुजेरर्थः । 'अनवने' किम् । महीं भुनक्ति ।

## २७३८ । णेरणौ यत्कर्म णौ चेत्सकर्ताऽनाध्याने । (१-३-६७)

ण्यन्तादात्मनेपदं स्यादणौ या क्रिया सैव चेण्ण्यन्तेनोच्यते । अणौ

म्रियते इत्यादावात्मनेपदन्न लभ्येतेत्यत आह । **वाक्यभेदेनेति** ॥ 'शदेः शित.' 'म्रियतेर्लुङ्लिङोश्च' इति एक वाक्यम् । शिद्भाविनः शदेरात्मनेपद स्यात् मृङो लुङ्प्रकृतिभूतात् शित्प्रकृतिभूताच्चात्मनेपद स्यात् नान्यत्रेत्यर्थ.। तेन शीयते म्रियते ममारेत्यादि सिद्ध्यति। सनो नेत्यपरं वाक्यम्। म्रियतेश्च सन्नन्तान्नात्मनेपदमित्यपरम्। तेन शिशत्सति, मुमूर्षति, इत्यादौ नात्मनेपदमित्यर्थ.।**प्रोपाभ्यां** ॥ आत्मनेपदमिति शेषः। **स्वरेति** ॥ स्वरौ अचौ आद्यन्तौ यस्य सः स्वराद्यन्तः। तथाभूतोपसर्गात्परत्व एव युजेरात्मनेपदमित्यर्थः । **द्वन्द्वमिति** ॥ द्वन्द्व द्विश न्यञ्चि अधोबिलानीत्यर्थः । **समः क्ष्णुवः** ॥ आत्मनेपदम् इति शेषः । 'समो गम्यृच्छिभ्याम्' इत्यत्रैव समो गम्यृच्छिक्ष्णुवः इति न सूत्रितम् । तथा सति अकर्मकादित्यनुवृत्त्या सकर्मकान्न स्यात् । तत्सूचयन्नुदाहरति । **संक्ष्णुते शस्त्रमिति** ॥ तीक्ष्णीकरोतीत्यर्थः । **भुजोऽनवने** ॥ अवनं रक्षणम् । ततोऽन्यत्र भुजेरात्मनेपदमित्यर्थः । ननु 'भुज पालनाभ्यवहारयोः' इत्ति धातुपाठे स्थितम् । तत्र बुभुजे पृथिवीपाल· पृथिवीमित्यत्र न पालनमर्थ. । तथा सति अनवने इति पर्युदासादात्मनेपदायोगात् । नाप्यभ्यवहरणम्, असम्भवात् । नहि पृथिव्या अभ्यवहरण सम्भवति । तथा 'वृद्धो जनो दुःखशतानि भुङ्क्ते' इत्यपि न युज्यते । दुःखशतानाम्पालनस्य अभ्यवहरणस्य चासम्भवात् । तत्राह । **इह उपभोगो भुजेरर्थः इति** ॥ धातूनामनेकार्थकत्वादिति भावः । **महीं भुनक्तीति** ॥ रक्षतीत्यर्थः । अत्र रौधादिकस्यैव 'भुज पालनाभ्यवहारयोः' इत्यस्य ग्रहणम् । नतु 'भुजो कौटिल्ये' इति तौदादिकस्यापीति भाष्यम् । भुजति वासः । कुटिलीभवतीत्यर्थः । **णेरणौ** ॥ इह चत्वार्यवान्तरवाक्यानि णेरिति प्रथम वाक्यम् । प्रत्ययग्रहणपरिभाषया णेरिति तदन्तग्रहणम् । आत्मनेपदमित्यधिकृतम् । तदाह । **ण्यन्तादात्मनेपदं**

**यत्कर्मकारकं स चेण्णौ कर्ता स्यान्न त्वाध्याने। 'णिचश्च' (सू २५६४) इति सिद्धेऽकर्त्रभिप्रायार्थमिदम्। कर्त्रभिप्राये तु 'विभाषोपपदेन—' (सू २७४४) इति विकल्पे 'अणावकर्मकात्—' (सू २७५४) इति परस्मैपदे च परत्वात्प्राप्ते 'पूर्वविप्रतिषेधेनेदमेवेष्यते'। कर्तृस्थभावकाः कर्तृस्थक्रियाश्चोदाहरणम्।**

**स्यादिति** ॥ अणौ यत् कर्म णौ चेदिति द्वितीय वाक्यम्। 'कर्तरि कर्मव्यतिहारे' इतिवत्कर्मशब्दोऽत्र क्रियापर। यत्तदोर्नित्यसम्बन्धात् तदिति लभ्यते। तथाच अणौ या क्रिया सा ण्यन्ते चेदिति लभ्यते। एव सति पचति पाचयतीत्यादौ सर्वत्र अणौ क्रियायाः ण्यन्ते अवश्यसत्त्वाद्वाक्यमिदमनर्थकम्। तस्मात् अणौ या क्रिया सैव ण्यन्ते चेदित्येवकारो लभ्यते। ततश्च द्वितीयवाक्यस्य फलितमाह। **अणौ या क्रिया सैव चेण्ण्यन्तेनोच्येत इति** ॥ स कर्तेति तृतीय वाक्यम्। अत्र अणौ यत् कर्म णौ चेदित्यनुवर्तते। कर्मशब्दोऽत्र कारकविशेषपरः। शब्दाधिकाराश्रयणात्। तदेतदाह। **अणौ यत्कर्मकारकं स चेण्णौ कर्ता स्यादिति** ॥ अत्र तच्छब्दस्य विधेयसमर्पककर्तृशब्दानुसारेण पुल्लिङ्गता ज्ञेया। 'शैत्य हि यत्सा प्रकृतिर्जलस्य' इतिवत्। अथ 'अनाध्याने' इति चतुर्थ वाक्य व्याचष्टे। **न त्वाध्याने इति** ॥ आध्यानमुत्कण्ठापूर्वक स्मरणम्। नञ नात्मनेपदमिति प्रसज्यप्रतिषेधोऽयमिति मन्यते। वस्तुतस्तु आध्याने आत्मनेपदन्नेत्यर्थाश्रयणे भवतीत्यत्र नञोऽन्वितत्वेन असामर्थ्यादाध्यानशब्देन समासासम्भवात् पर्युदास एवायम्। 'न त्वाध्याने' इति मूलन्तु फलितार्थकथनपरमेव। तथाच आध्यानभिन्नेऽर्थे विद्यमानात् ण्यन्तादात्मनेपद स्यादित्येव प्रथमवाक्य एव आध्याने इत्यस्यान्वयात् त्रीण्येवात्रावान्तरवाक्यानीति युक्तम्। वाक्यत्रयमित्येव च भाष्ये दृश्यते। ननु 'णिचश्च' इति सिद्धे किमर्थमिद सूत्रमित्यत आह। **णिचश्चेतीति** ॥ परगामिन्यपि फले आत्मनेपदार्थमित्यर्थ। स्यादेतत्। 'विभाषोपपदेन प्रतीयमाने' इति सूत्र वक्ष्यते। कर्तृगामिनि क्रियाफले यदात्मनेपद विहितं तत् उपपदेन क्रियाफलस्य कर्तृगामित्वे गम्ये वा स्यादिति तदर्थः। स्व यज्ञ यजति यजते वेत्याद्युदाहरणम्। 'णेरणौ' इत्यस्य तु दर्शयते भवः इत्यनुपदमेव उदाहरण वक्ष्यते इति स्थितिः। तत्र दर्शयते भवः स्वयमेवेत्यत्र फलस्य कर्तृगामित्वविवक्षायां णेरणाविति नित्यमात्मनेपदमिष्यते। तत्र परत्वात् 'विभाषोपपदेन' इति विकल्पः स्यात्। 'णेरणौ' इत्यस्य फले आत्मगामित्वगमकोपपदाभावे सावकाशत्वात्। किञ्च 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति वक्ष्यते। अण्यन्ते यो धातुरकर्मक. चित्तवत्कर्तृकश्च तस्मात् ण्यन्तात् परस्मैपद स्यादिति तदर्थ। शेते कृष्णः। त गोपी शाययतीत्युदाहरणम्। णेरणावित्यस्य तु दर्शयते भव इत्युदाहरण विषय इति स्थितिः। तत्र लूधातो· लुनाति केदार देवदत्तः इत्यत्र चित्तवत्कर्तृकत्वात् लूयते केदार· इति कर्मकर्तरि कर्मणः केदारस्य कर्तृत्वेन विवक्षिततया अकर्मकत्वाच्च लावयते केदार इति ण्यन्तात् 'णेरणौ' इत्यात्मनेपद बाधित्वा परत्वात् 'अणावकर्मकात्' इति परस्मैपदमेव स्यात्। णेरणावित्यस्य दर्शयते भव. इत्यत्र सावकाशत्वादित्यत आह। **कर्त्रभिप्राये त्विति** ॥ **पूर्वविप्रतिषेधेनेति** ॥ पूर्वविप्रतिषेधाश्रयणे राजा दर्शयते

तथाहि । पश्यन्ति भवं भक्ताः । चाक्षुषज्ञानविषयं कुर्वन्तीत्यर्थः । प्रेरणांशत्यागे पश्यति भवः । विषयो भवतीत्यर्थः । ततो हेतुमण्णिच् । दर्शयन्ति

---

इति भाष्यप्रयोगो मानम् । अन्यथा तत्र 'अणावकर्मकात्' इति परस्मैपदापत्तेः । दर्शनविषयो भवतीत्यर्थे पश्यति भवः इत्यत्र दृशेरणावकर्मकत्वात् चित्तवत्कर्तृकत्वाच्च 'विभाषोपपदेन' इति विकल्पबाधविषये पूर्वविप्रतिषेधाश्रयणे तु व्याख्यानमेव शरणम् । अन्ये तु दर्शयते राजा इति भाष्यप्रयोगः फलस्य परगामित्वाविषयो भविष्यति । एवञ्च कर्तृगामिनि क्रियाफले परत्वादणावकर्मकादित्यस्य प्रवृत्तौ न किञ्चिद्बाधकमिति पूर्वविप्रतिषेधाश्रयणञ्चिन्त्यमित्याहुः । तच्चिन्त्यम् । अणावकर्मकादित्यस्य परगामिन्यपि फले परत्वात् प्रवृत्तेर्दुर्वारत्वात् । नह्यणावकर्मकादित्यत्र कर्त्रभिप्राये इत्यस्ति । 'स्वरितञितः कर्त्रभिप्राये' इत्यस्य बहुव्यवहितत्वादिति शब्दरत्ने प्रपञ्चितम् । ननु दर्शनविषयो भवतीत्यर्थे दर्शयते भवः इत्यत्र वस्तुतो दर्शनकर्मीभूतस्यैव भवस्य कर्तृत्वविवक्षाया तस्य 'कर्मवत्कर्मणा' इति कर्मवद्भावात् 'भावकर्मणोः' इत्यात्मनेपदसिद्धेः 'णेरणौ' इति सूत्र व्यर्थमित्यत आह । **कर्तृस्थेति** ॥ कर्तृस्थ भावो येषां ते कर्तृस्थभावकाः । कर्तृस्था क्रिया येषा ते कर्तृस्थक्रियाः एवविधा धातव इह सूत्रे उदाहरणम् । 'कर्मवत्कर्मणा' इत्यस्य तु कर्मस्थभावका कर्मस्थक्रियाश्चोदाहरणमिति प्रकृतसूत्रे 'कर्मवत्कर्मणा' इति सूत्रे च भाष्ये स्पष्टम् । अतो विषयभेदात् 'कर्मवत् कर्मणा' इत्यनेन 'णेरणौ' इत्यस्य न गतार्थतेति भावः । अपरिस्पन्दनसाधनसाध्यो धात्वर्थो भावः । यथा दर्शनश्रवणादिः । परिस्पन्दनसाधनसाध्यो धात्वर्थः क्रिया । यथा पाकादिः । यद्यपि दर्शने चक्षुरुन्मीलनादिरूप स्पन्दनमस्ति । तथापि तद्भिन्नहस्तपादादिचेष्टैवात्र स्पन्दनमित्यविरोधः । तत्र कर्तृस्थभावकमुदाहरति । **पश्यन्ति भवं भक्ताः इति** ॥ सकर्मकेषु धातुषु फलव्यापारयोर्धातुः । यथा पचेर्विक्लित्त्यनुकूलो व्यापारः । तत्र विक्लित्तिः फलम् । तदनुकूलोऽधिश्रयणादिर्व्यापारः । धातूपात्तव्यापाराश्रयः कर्ता देवदत्तादिः । व्यापारव्यधिकरणधातूपात्तफलाश्रयभूतङ्कर्म । यथा तण्डुलान् पचतीत्यत्र विक्लित्त्याश्रयास्तण्डुला इति स्थितिः । प्रकृते च दृशेश्चाक्षुषज्ञानानुकूलव्यापारार्थकत्वे सकर्मकत्वानुपपत्तिः । फलस्य चाक्षुषज्ञानस्य तदनुकूलप्रयत्नादेश्च समानाधिकरणत्वात् । अतो दृशेश्चाक्षुषज्ञानविषयत्वापत्त्यनुकूलव्यापारोऽर्थः । तत्र ज्ञानविषयत्वापत्तिः फलम् । तदनुकूलः प्रयत्नादिव्यापारो देवदत्तनिष्ठः । एवञ्च प्रयत्नादिव्यापारव्यधिकरणचाक्षुषज्ञानविषयत्वरूपफलाश्रयो घटादिः कर्मेति युज्यते । तदेतदाह । **चाक्षुषज्ञानविषयं कुर्वन्तीत्यर्थः इति** ॥ **प्रेरणेति** ॥ यथा चाक्षुषज्ञानविषयत्वापत्तिरेव दृशेरर्थो विवक्षितः । ननु तदनुकूलव्यापारः कृञ्धातुगम्यः प्रेषणांशः । तदा पश्यति भवः इत्यस्य चाक्षुषज्ञानविषयस्सम्पद्यते इत्यर्थः । सौकर्यातिशयविवक्षया अनुकूलव्यापारांशस्य अविवक्षा बोध्या । तथाच चाक्षुषज्ञानविषयत्वापत्तेरेव दृश्यर्थत्वात्तदाश्रयस्य भवस्य कर्तृत्वमेव । तदाह । **विषयो भवतीत्यर्थः इति** ॥ लक्षणया चाक्षुषज्ञानविषयो भवतीत्यर्थ इत्यर्थः । नचात्र भवस्य वस्तुतो दर्शनकर्मणः इह कर्तृत्वात् 'कर्मवत्कर्मणा तुल्यक्रियः' इति कर्मवत्त्वाद्यगादिकमेव स्यान्न तु शबादीति शङ्क्यम् । 'कर्मवत्कर्मणा' इत्यस्य कर्मस्थभावकेषु कर्मस्थक्रियेषु च प्रवृत्तेः । अतः कर्मकर्तर्यपि शबादिकमेवेति भावः । **ततः**

भवं भक्ताः । पश्यन्तीत्यर्थः । पुनर्ण्यर्थस्याविवक्षायां दर्शयते भवः । इह प्रथमतृतीययोरवस्थयोर्द्वितीयचतुर्थ्योश्च तुल्योऽर्थः । तत्र तृतीयकक्ष्यायां न तङ् । क्रियासाम्येऽप्यणौ कर्मकारकस्य णौ कर्तृत्वाभावात् । चतुर्थ्यां तु तङ् । द्वितीयामादाय क्रियासाम्यात् । प्रथमायां कर्मणो भवस्येह कर्तृत्वाच्च ।

---

**इति** ॥ क्रिया तु गम्य प्रेषणांश विहाय चाक्षुषज्ञानविषयत्वापत्तिवृत्तेर्दृशेर्हेतुमण्णिजित्यर्थः । **दर्शयन्ति भवं भक्ताः इति** ॥ चाक्षुषज्ञानविषयत्वमापादयन्तीति णिजन्तस्य फलितोऽर्थः । तदाह । **पश्यन्तीत्यर्थः इति** ॥ चाक्षुषज्ञानविषयङ्कुर्वन्तीत्यर्थ । **पुनरिति** ॥ चाक्षुषज्ञानविषयत्वमापादयन्तीत्यर्थके दर्शयन्ति भव भक्ता इत्युक्तोदाहरणे णिजर्थस्य आपादनाशस्य अविवक्षाया प्रकृतसूत्रेणात्मनेपदं सति दर्शयते भव इत्युदाहरणमित्यर्थः । अत्र ण्यन्तस्य प्रेरणारहितेऽर्थे लक्षणा । गङ्गायाङ्घोष इत्यत्र टाप इव णिच. स्थितिः । चुरादेराकृतिगणत्वात् स्वार्थिको णिजित्यन्ये । **इहेति** ॥ अवस्था पदविशेषात्मकावयवसन्निवेशविशेषः । प्रथमा च द्वितीया च प्रथमद्वितीये। तयोरवस्थयोरिति विग्रह । 'सर्वनाम्नो वृत्तिमात्रे' इति प्रथमाशब्दस्य पुवत्त्वम् । पश्यन्ति भव भक्ता इति प्रथमावस्था । पदविशेषसन्दर्भ इति यावत् । अवस्थैव कक्ष्येति व्यवहरिष्यते मूले । कक्ष्या हि राजधान्यादौ जनविशेषसङ्घातनिवासात्मिका अनन्तरस्थानप्रापिका । तद्यथा । रामायणे 'आ पञ्चमायाः कक्ष्यायाः नैनङ्कश्चिदवारयत्' इत्यादि । इदञ्च प्रथमवाक्यम् । प्रेरणांशत्यागे पश्यति भव इति द्वितीयवाक्यस्य उपपादकम् । चाक्षुषज्ञानविषयत्वापादने दृश्यर्थे प्रेरणाशत्यागस्य प्रेरणाविशिष्टार्थकदृशिघटितप्रथमवाक्याभावे असम्भवात् । प्रेरणाशत्यागे पश्यति भव इति द्वितीया कक्ष्या तु दर्शनविषयत्वापत्तिमात्रार्थकाद्धेतुमण्णिचि दर्शयन्ति भव भक्ता इति तृतीयवाक्यस्य पश्यन्ति भव भक्ता इति प्रथमवाक्यसमानार्थकस्य उपपादिका । चाक्षुषज्ञानविषयत्वापादनानुकूलव्यापारार्थवृत्तेर्दृशेर्हेतुमण्णिचि चाक्षुषज्ञानविषयत्वापत्त्यनुकूलव्यापारान्तरस्यापि प्रवेशापत्तेः । तृतीय वाक्यन्त्विदन्दर्शयन्तीति ण्यर्थस्याविवक्षाया दर्शयते भवः इति चतुर्थवाक्यस्य दर्शनविषयो भवतीति द्वितीयवाक्यसमानार्थकस्य ण्यन्तघटितस्योपपादकमिति स्पष्टमेव । तथाच प्रथमतृतीययोः कक्ष्ययोः पश्यन्ति भव भक्ता', दर्शयन्ति भव भक्ताः, इत्यनयो तथा पश्यति भव', दर्शयते भव., इति द्वितीयचतुर्थ्यो कक्ष्ययोश्च तुल्योऽर्थ इत्यर्थ. । तत्र प्रथमद्वितीययोः कक्ष्ययो: दृशेर्ण्यन्तत्वाभावादेव तङो न प्रसक्तिरिति मत्वा आह । **तत्र तृतीयकक्ष्यायान्न तङिति** ॥ कुत इत्यत आह । **क्रियासाम्येऽपीति** ॥ दर्शयन्ति भवं भक्ता इति तृतीयकक्ष्यायाः, पश्यन्ति भव भक्ता', इति प्रथमकक्ष्यासमानार्थकतया अणौ या क्रिया सैव चेण्यन्तेनोच्येतेत्यशस्य सत्त्वेऽपि प्रथमकक्ष्यायामणौ कर्मकारकस्य भवस्य दर्शयन्ति भव भक्ता इति तृतीयकक्ष्याया णौ कर्तृत्वाभावादित्यर्थः । एवञ्चतुर्थकक्ष्योपपादिका तृतीयकक्ष्यैषा प्रत्युदाहरणञ्चेत्युक्ता भवति । अणौ या क्रिया सैव चेण्यन्तेनोच्येतेत्यशस्य तु अध्यारोपितप्रेरणपक्षे द्वितीयकक्ष्यायान्न ताङिति वक्ष्यते । चतुर्थकक्ष्या तु प्रकृतसूत्रस्योदाहरणमित्याह । **चतुर्थ्यान्तु तङिति** ॥ 'णेरणौ' इति प्रकृतसूत्रेणेति शेषः । तदेवोपपादयति । **द्वितीयामादायेति** ॥ पश्यति भव इति द्वितीयकक्ष्या-

एवमारोहयते हस्तीत्यप्युदाहरणम् । आरोहन्ति हस्तिनं हस्तिपकाः । न्यग्भावयन्तीत्यर्थः । तत आरोहति हस्ती । न्यग्भवतीत्यर्थः। ततो णिच् आरोहयन्ति । आरोहन्तीत्यर्थः । तत आरोहयते न्यग्भवतीत्यर्थः । यद्वा पश्यन्त्यारोहन्तीति प्रथमकक्ष्या प्राग्वत् । ततः कर्मण एव हेतुत्वारोपाण्णिच् । दर्शयति भवः । आरोहयति हस्ती । पश्यत आरोहतश्च प्रेरयतीत्यर्थः । ततो णिज्भ्यां तत्प्रकृति-

या या चाक्षुषज्ञानविषयत्वापत्तिरूपा क्रिया तस्या एव दर्शयते भव इति चतुर्थकक्ष्यायां ण्यन्तदृश्यर्थत्वादित्यर्थः । अनेन अणौ या क्रिया सैव चेण्ण्यन्तेनोच्येतेत्यंश उपपादितः । अथ अणौ यत्कर्मकारक णौ स चेत्कर्ता स्यादित्यंशमुपपादयति । **प्रथमायामिति** ॥ पश्यन्ति भव भक्ता इति प्रथमकक्ष्याया अण्यन्तदृशिकर्मणो भवस्य दर्शयते भव इति चतुर्थकक्ष्याया ण्यन्तदृशिककर्तृत्वाच्चेत्यर्थः । अथ कर्तृस्थक्रियाधातुमुदाहरति । **एवमारोहयते हस्तीत्यप्युदाहरणमिति** ॥ तत्र प्रथमकक्ष्यामाह । **आरोहन्ति हस्तिनं हस्तिपकाः इति** ॥ हस्तिनम्पान्तीति हस्तिपाः । त एव हस्तिपकाः । स्वार्थे कः । उपरिभागाक्रमणानुकूलव्यापारो रुहेरर्थः । तत्र प्रासादमारोहतीत्यादौ उपरिभागाक्रमणानुकूलव्यापारस्सोपानगमनादि । इह तु उच्चस्य हस्तिनो न्यग्भावनमेव उपरिभागाक्रमणानुकूलो व्यापारो विवक्षितः । तच्च नीचीकरणम् । तदाह । **न्यग्भावयन्तीति** ॥ अत्र उपरिभागाक्रमणानुकूलन्यग्भावनानुकूलोऽङ्कुशपातादिः व्यापारः । उपरिभागाक्रमणानुकूलन्यग्भवन फलम् । तदाश्रयत्वाद्धस्ती कर्म । तादृशव्यापाराश्रयत्वाद्धस्तिपकाः कर्तारः । अथ द्वितीयकक्ष्यामाह । **ततः इति** ॥ प्रेरणांशपरित्यागे सति उपरिभागाक्रमणानुकूलन्यग्भवनार्थकाल्लटि आरोहति हस्तीति भवतीत्यर्थः । प्रेषणांशपरित्यागे फलितमाह । **न्यग्भवतीत्यर्थः इति** ॥ अथ तृतीयकक्ष्यामाह । **ततो णिजिति** ॥ प्रेषणांश परित्यज्य न्यग्भवनार्थकत्वमाश्रितात् धातोः प्रेषणविवक्षायां हेतुमण्णिजिति भावः । **आरोहयन्तीति** ॥ हस्तिन हस्तिपका इति शेषः । प्रेषणांशनिवृत्तौ णिजन्तस्य फलितमर्थमाह । **आरोहयन्तीत्यर्थः इति** ॥ आक्रमणाय हस्तिन न्यग्भावयन्तीति यावत् । चतुर्थकक्ष्यामाह । **ततः इति** ॥ अविवक्षितप्रेषणात् ण्यन्तात् प्रकृतसूत्रेणात्मनेपदे आरोहयते इति रूपमित्यर्थः । प्रेषणांशत्यागे सति ण्यन्तस्य फलितमर्थमाह । **न्यग्भवतीत्यर्थ इति** ॥ तदेव निवृत्तप्रेषणाद्धातोः प्रकृतेऽर्थे णिजिष्यते, इति पक्षमाश्रित्योदाहृतम् । इदानीमध्यारोपितप्रेषणपक्षमाश्रित्य आह । **यद्वेति** ॥ **पश्यन्तीति** ॥ पश्यन्ति भव भक्ता इति, आरोहन्ति हस्तिन हस्तिपकाः इति च, प्रथमकक्ष्या पूर्ववद्व्याख्येयेत्यर्थः । द्वितीयकक्ष्यामाह । **ततः कर्मणः इति** ॥ दृशेः रुहेश्च प्रथमकक्ष्याया कर्मीभूतस्य भवस्य हस्तिनश्च प्रयोजककर्तृत्वरूपहेतुत्वारोपाद्धेतुमण्णिजित्यर्थः । **दर्शयति भवः इति** ॥ भक्तानिति शेषः । तदाह । **पश्यत आरोहतश्च प्रेरयतीत्यर्थः इति** ॥ चाक्षुषज्ञानविषयत्वमापादयतो भक्तान् भव प्रेरयति न्यग्भावयतो हास्तिपान् हस्ती प्रेरयतीत्यर्थः । उभयत्र हेतुमण्णिच् । तत्र प्रकृतिभ्या दृशिरुहिभ्यामेकैकम्प्रेरणम् । णिचा तु तद्विषयकमेकैकम्प्रेरणान्तरम्प्रतीयते इति स्थितिः । चतुर्थकक्ष्यामाह । **ततो**

भ्यां च उपात्तयोर्द्वयोरपि प्रेषणयोस्त्यागे दर्शयते आरोहयते इत्युदाहरणम् । अर्थः प्राग्वत् । अस्मिन्पक्षे द्वितीयकक्ष्यायां न तङ् । समानक्रियात्वाभावाण्णिजर्थस्याधिक्यात् । 'अनाध्याने' किम् । स्मरति वनगुल्मं कोकिलः । स्मरयति वनगुल्मः । उत्कण्ठापूर्वकस्मृतौ विषयो भवतीत्यर्थः । 'भीस्म्योर्हेतुभये' (सू २५९४) व्याख्यातम् ।

## २७३९ । गृधिवञ्च्योः प्रलम्भने । (१-३-६९)

प्रतारणेऽर्थे ण्यन्ताभ्यामाभ्यां प्राग्वत् । माणवकं गर्धयते, वञ्चयते वा । 'प्रलम्भने' किम् । श्वानं गर्धयति । अभिकाङ्क्षामस्योत्पादयतीत्यर्थः । अहिं वञ्चयति । वर्जयतीत्यर्थः । 'लियः सम्माननशालिनीकरणयोश्च' (सू २५९२) । व्याख्यातम् ।

**णिज्भ्यामिति** ॥ हेतुमण्णिजभ्या तत्प्रकृतिभूतदृशिरुहिभ्याञ्च उपात्तयो प्रेरणयोस्त्यागे सति चाक्षुषज्ञानविषयो भवति भव इति न्यग्भवति हस्तीनि चार्थ. पर्यवस्यति । तत्र प्रकृतसूत्रेणात्मनेपदे दर्शयते भवः आरोहयते हस्तीनि च सिद्धमित्यर्थः। पश्यन्ति भव भक्ता इति आरोहन्ति हस्तिन हस्तिपका इति च प्रथमकक्ष्यायाङ्कर्मणो भवस्य हस्तिनश्च तृतीयकक्ष्यायाङ्कर्तृत्वात् प्रथमकक्ष्यायां अणौ या क्रिया तस्या एवात्र तृतीयकक्ष्यायां सत्त्वाच्चेति तृतीयकक्ष्यामुदाहरणे सूत्रप्रवृत्तिरुपपाद्या । नच प्रथमकक्ष्यायाञ्चाक्षुषज्ञानविषयङ्कुर्वन्तीति न्यग्भावयन्तीति प्रकृत्युपात्तस्य प्रेषणाशस्य तृतीयकक्ष्यायां त्यागादणौ या क्रिया सैव चेण्ण्यन्तेनोच्यतेत्यशस्य कथ प्रवृत्तिरिति वाच्यम् । सैव चेण्ण्यन्तेनेत्यत्र आधिक्यमात्र व्यवच्छिद्यते, नतु न्यूनत्वमपि इत्यदोषात् । ननु द्वितीयकक्ष्यायामेव कुतो न तङित्यत आह । **अस्मिन्पक्षे द्वितीयेति** ॥ कुत इत्यत आह । **समानक्रियात्वाभावादिति** ॥ द्वितीयकक्ष्याया अणौ या क्रिया सैव चेण्ण्यन्तेनोच्यतेत्यशस्याभावादिति यावत् । तदेवोपपादयति । **णिजर्थस्येति** ॥ णेरिति किम् । पश्यत्यारोहतीति निवृत्तप्रेषणान्मा भूत् । **स्मरति वनगुल्मङ्कोकिलः इति** ॥ स्मृतिविषयत्वमापादयतीत्यर्थ । पक्षद्वयेऽप्येषा प्रथमकक्ष्या द्वितीयतृतीयकक्ष्ययोरप्युपलक्षणम् । तत्र निवृत्तप्रेषणपक्षे स्मरति वनगुल्म इति द्वितीयकक्ष्या । स्मृतिविषयो भवतीत्यर्थः। स्मरति वनगुल्मङ्कोकिल इति तृतीयकक्ष्या । स्मृतिविषयत्वमापादयतीत्यर्थ । अध्यारोपितप्रेषणपक्षे त्वेषा द्वितीयकक्ष्या। स्मरन्तम्प्रेरयतीत्यर्थ । **स्मरयति वनगुल्मः इति** ॥ प्रत्युदाहरणमिदम् । निवृत्तप्रेषणपक्षे चतुर्थकक्ष्यैषा । अध्यारोपितप्रेषणपक्षे तु तृतीयकक्ष्येति बोध्यम् । 'स्मृ आध्याने' इति घाटादिकत्वेन मित्त्वाद्ध्रस्वः । विस्तरस्त्वत्र प्रौढमनोरमाशब्दरत्नशब्देन्दुशेखरेष्वनुसन्धेय । **गृधिवञ्च्योः** ॥ प्रलम्भनं प्रतारणमिति मत्वा आह । **प्रतारणेऽर्थे इति** ॥ **प्राग्वदिति** ॥ आत्मनेपदमित्यर्थः । धातूनामनेकार्थकत्वादनयोः प्रतारणे वृत्तिः । **मिथ्योप-**

## २७४० । मिथ्योपपदात्कृञोऽभ्यासे । (१-३-७१)

'णेः' इत्येव। पदं मिथ्या कारयते । स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः । 'मिथ्योपपदात्' किम् । पदं सुष्ठु कारयति । 'अभ्यासे' किम् । सकृत्पदं मिथ्या कारयति । 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' (सू २१५८) । यजते । सुनुते । 'कर्त्रभिप्राये' किम् । ऋत्विजो यजन्ति । सुन्वन्ति ।

## २७४१ । अपाद्वदः । (१-३-७३)

न्यायमपवदते । कर्त्रभिप्राये इत्येव । अपवदति । 'णिचश्च' (सू २५६४) । कारयते ।

## २७४२ । समुदाङ्भ्यो यमोऽग्रन्थे । (१-३-७५)

'अग्रन्थे' इति च्छेदः । व्रीहीन् संयच्छते । भारमुद्यच्छते । वस्त्रमायच्छते । 'अग्रन्थे' किम् । उद्यच्छति वेदम् । अधिगन्तुमुद्यमं करोतीत्यर्थः । कर्त्रभिप्राये इत्येव । व्रीहीन् संयच्छति ।

## २७४३ । अनुपसर्गाज्ज्ञः । (१-३-७६)

गां जानीते । 'अनुपसर्गात्' किम् । "स्वर्गं लोकं न प्रजानाति" । कथं तर्हि भट्टिः—'इत्थं नृपः पूर्वमवालुलोचे ततोऽनुजज्ञे गमनं सुतस्य' इति । कर्मणि लिट् । नृपेणेति विपरिणामः ।

---

**पदात्** ॥ अभ्यासवृत्तेर्मिथ्याशब्दोपपदकात् कृञः आत्मनेपदमित्यर्थ· । इत ऊर्ध्वं णेरिति निवृत्तम् । **अपाद्वदः** ॥ अपपूर्वाद्वदधातोरात्मनेपदमित्यर्थः । **न्यायमपवदते इति** ॥ वदनेन निरस्यतीत्यर्थः । 'किमिह वचनन्न कुर्यान्नास्ति वचनस्यातिभारः' इति न्यायात् । **समुदाङ्भ्यो** ॥ सम् उत् आङ् एतत्पूर्वात् अग्रन्थविषयकात् यमेरात्मनेपदमित्यर्थः । **व्रीहीन् संयच्छते इति** ॥ सङ्गृह्णातीत्यर्थः । **भारमुद्यच्छते इति** ॥ उद्गृह्णातीत्यर्थः । **वस्त्रमायच्छते इति** ॥ कट्यादौ निबध्नातीत्यर्थः । **कर्त्रभिप्राये इत्येवेति** ॥ **व्रीहीन् संयच्छतीति** ॥ परार्थं सङ्गृह्णातीत्यर्थ. । 'आङो यमहनः' इत्येव सिद्धे आङ्ग्रहण सकर्मकार्थम् । तस्य अकर्मकादेव प्रवृत्तेरिति बोध्यम् । **अनुपसर्गाज्ज्ञः** ॥ अनुपसर्गात् ज्ञाधातोरात्मनेपदमित्यर्थः । 'अकर्मकाच्च' इत्येव सिद्धे सकर्मकार्थमिदम् । तदाह । **गाञ्जानीते इति** ॥ अनुपूर्वकस्य अनुमत्यर्थकस्य ज्ञाधातोरुपसर्गपूर्वकतया प्रकृतसूत्रस्याप्रवृत्तेः सकर्मकतया 'अकर्मकाच्च' इत्यस्याप्यप्रवृत्तेः। **अनुजज्ञे इति** ॥ कथमात्मनेपदमित्यर्थः । समाधत्ते । **कर्मणि लिडिति** ॥ तथाच 'भावकर्मणोः' इत्यात्मनेपदमिति भावः । सुतस्य गमनमनुज्ञातमित्यर्थः फलति । नन्वेव सति नृप इति प्रथमान्तस्य कथमिहान्वय इत्यत आह । **नृपेणेति विपरिणामः इति** ॥ अवालुलोचे

## २७४४ । विभाषोपपदेन प्रतीयमाने । (१-३-७७)

'स्वरितञितः' इत्यादिपञ्चसूत्र्या यदात्मनेपदं विहितं तत्समीपोच्चारितेन पदेन क्रियाफलस्य कर्तृगामित्वे द्योतिते वा स्यात्। स्वं यज्ञं यजति—यजते वा। स्वं कटं करोति—कुरुते वा । स्वं पुत्रमपवदति—अपवदते वा । स्वं यज्ञं कारयति--कारयते वा । स्वं व्रीहिं संयच्छति--संयच्छते वा । स्वां गां जानाति —जानीते वा ।

---

इत्यत्रान्वित नृप इति प्रथमान्त तृतीयया विपरिणमितमत्रानुषज्यते इत्यर्थः । **विभाषोपपदेन ॥ स्वरितञित इत्यादीति** ॥ 'स्वरितञितः कर्त्रभिप्राये क्रियाफले, अपाद्वद:, णिचश्च, समुदाङ्भ्यो यमोऽग्रन्थे, अनुपसर्गाज्ज्ञ' ' इति पञ्चसूत्रीत्यर्थः । समीपोच्चारितम्पदमुपपदम्, नतु 'तत्रोपपद सप्तमीस्थम्' इति सङ्केतितम् । असम्भवात् । तदाह । **समीपोच्चारितेन पदेनेति** ॥ फलस्य कर्तृगामित्वे नित्यमात्मनेपदे पञ्चसूत्रया प्राप्ते विभाषेयमिति 'नवेति विभाषा' इति सूत्रे भाष्ये स्पष्टम् । **स्वं यज्ञमिति** ॥ स्वीयमित्यर्थः । अत्र स्वशब्देनैव फलस्यात्मगामित्वावगमात् 'स्वरितञितः' इति नित्यमात्मनेपदस्यानेन विकल्पः । स्व यज्ञ कारयतीत्यत्र 'णिचश्च' इत्यस्यानेन विकल्पः । **स्वं व्रीहिमिति** ॥ अत्र 'समुदाङ्भ्यो यमः' इत्यस्यानेन विकल्पः । **स्वां गामिति** ॥ अत्र 'अनुपसर्गाज्ज्ञः' इत्यस्यानेन विकल्पः ॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायामात्मनेपदव्यवस्था समाप्ता ।

श्रीरस्तु ।

# ॥ अथ तिङन्तपरस्मैपदप्रकरणम् ॥

'शेषात्कर्तरि परस्मैपदम्' (२१५९) अस्ति ।

## २७४५ । अनुपराभ्यां कृञः । (१-३-७९)

कर्तृगेऽपि फले गन्धनादौ च परस्मैपदार्थमिदम् । अनुकरोति । पराकरोति । कर्तरीत्येव । भावकर्मणोर्मा भूत् । न चैवमपि कर्मकर्तरि प्रसङ्गः । कार्यातिदेशपक्षस्य मुख्यतया तत्र 'कर्मवत्कर्मणा—' (सू २७६६) इत्यात्मनेपदेन परेणास्य बाधात् । शास्त्रातिदेशपक्षे तु 'कर्तरि शप्' (सू २१६७) इत्यतः 'शेषात्—' (सू २१५९) इत्यतश्च कर्तृग्रहणद्वयमनुवर्त्य कर्तैव यः कर्ता न तु कर्मकर्ता तत्रेति व्याख्येयम् ।

अथ परस्मैपदव्यवस्थान्निरूपयितुमुपक्रमते ॥ **शेषात्कर्तरीति** ॥ **अनुपराभ्यां कृञः** ॥ परस्मैपदमिति शेष. । ननु 'स्वरितञित.' इत्यात्मनेपदस्य कर्तृगामिन्येव फले विधानादकर्तृगामिनि फले 'शेषात्कर्तरि' इति परस्मैपदस्य सिद्धत्वात् किमर्थमिदमित्यत आह । **कर्तृगे चेति** । **गन्धनादाविति** ॥ गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु इत्यर्थः । **मा भूदिति** ॥ भावे कर्मणि लकारस्य कर्तृगे फले परस्मैपदनिवृत्त्यर्थं कर्तरीत्यस्यानुवृत्तिरिति भाव.। ननु कर्तरीत्यस्यानुवृत्तावपि अनुक्रियते शब्द· स्वयमेवेत्यत्र कर्मकर्तरि परस्मैपदन्दुर्वारमित्याशङ्क्य परिहरति। **नचेति** ॥ एवमपि कर्तरीत्यस्यानुवृत्तावपि कर्मकर्तरि आत्मनेपदस्य प्रसङ्गो न शङ्क्य इत्यर्थः । कुत इत्यत आह । **कार्यातिदेशेति** ॥ तत्र कर्मकर्तरि 'कर्मवत्कर्मणा तुल्यक्रिय.' इत्यात्मनेपदेन परेणास्य परस्मैपदस्य बाधादित्यन्वय· । ननु कर्मणि यच्छास्त्र तत् 'कर्मवत्कर्मणा' इति कर्मकर्तर्यतिदिश्यते । तथा चात्र कर्मकर्तरि 'भावकर्मणो.' इत्यात्मनेपदशास्त्रमिह प्राप्तम् । तस्य च परत्वाभावात् 'अनुपराभ्यां कृञः' इत्यनेन कथं बाधः स्यादित्यत आह । **कार्यातिदेशपक्षस्य मुख्यतयेति** ॥ शास्त्रातिदेशस्य कार्यातिदेशार्थतया कार्यातिदेशस्य मुख्यत्वम्। ततश्च कर्मवत् कर्मणेत्यनेन कर्मणि विहितमात्मनेपद कर्मकर्तरि विधीयते। तस्य च परत्वात्तेनात्मनेपदेन 'अनुपराभ्याम्' इति परस्मैपदङ्कर्मकर्तरि बाधमर्हतीति भावः । 'कर्मवत्कर्मणा' इत्यत्र शास्त्रातिदेशमभ्युपगम्य आह। **शास्त्रातिदेशपक्षे त्विति** ॥ 'अनुपराभ्या कृञः' इत्यत्र 'कर्तरि कर्मव्यतिहारे' इत्यस्मादेकङ्कर्तृग्रहणमनुवर्तते । तथा 'शेषात् कर्तरि परस्मैपदम्' इत्यस्मात् द्वितीयं कर्तृग्रहणमनुवर्तते । तथा च स्वभावत एव यः कर्ता, नतु विव-

## २७४६ । अभिप्रत्यतिभ्यः क्षिपः । (१-३-८०)

'क्षिप प्रेरणे' । स्वरितेत् । अभिक्षिपति ।

## २७४७ । प्राद्वहः । (१-३-८१)

प्रवहति ।

## २७४८ । परेर्मृषः । (१-३-८२)

परिमृष्यति । भौवादिकस्य तु परिमर्षति । इह परेरिति योगं विभज्य वहेरपीति केचित् ।

## २७४९ । व्याङ्परिभ्यो रमः । (१-३-८३)

विरमति ।

## २७५० । उपाच्च । (१-३-८४)

यज्ञदत्तमुपरमति । उपरमयतीत्यर्थः । अन्तर्भावितण्यर्थोऽयम् ।

---

क्षाधीनः कर्मकर्ता तथाविधकर्तर्येव 'अनुपराभ्यां कृञः' रस्मैपदमिति लभ्यते । एवञ्च कर्मकर्तरि नास्य प्रवृत्तिरित्यर्थः । **अभिप्रति** ॥ परस्मैपदमिति शेषः । **स्वरितेदिति** ॥ ततश्च कर्तृगामिनि फले आत्मनेपदे प्राप्ते अनेन तत्रापि परस्मैपदमिति भावः । **अभिक्षिपतीति** ॥ प्रतिक्षिपति अतिक्षिपति इत्यप्युदाहार्यम् । **प्राद्वहः** ॥ प्रपूर्वाद्वहेः परस्मैपदमित्यर्थः । वहेः स्वरितेत्त्वात् कर्तृगामिन्यात्मनेपदे प्राप्ते तत्राप्यनेन परस्मैपदम् । **परेर्मृषः** ॥ परस्मैपदमिति शेषः । 'मृषस्तितिक्षायाम्' इति दैवादिकस्य स्वरितेत्त्वात् पदद्वये प्राप्ते अय विधिः । तदाह । **परिमृष्यतीति** ॥ चौरादिकस्यापि 'आधृषाद्वा' इति णिजभावे स्वरितेत्त्वेऽपि परस्मैपदमेव परिमर्षतीति । **भौवादिकस्य त्विति** ॥ 'मृषु सहने, सेचने च' इति भौवादिकस्य तु परस्मैपदित्वात् परिमर्षतीत्येव रूप सिद्धम् । अतोऽस्मिन् सूत्रे तस्य न ग्रहणमिति भावः । **इहेति** ॥ परेरिति योगो विभज्यते । वह इत्यनुवर्तते । परेर्वहः परस्मैपदमित्यर्थः । परिवहति । मृष इति योगान्तरम् । तत्र परेः इत्यनुवर्तते परेः मृषः परस्मैपदमित्युक्तोर्थ इति केचिदाहुरित्यर्थः । भाष्ये त्वय योगविभागो न दृश्यते । **व्याङ्परिभ्यो रमः** ॥ परस्मैपदमिति शेषः । रमेरनुदात्तेत्वाद्विधिरयम् । **विरमतीति** ॥ आरमति, परिरमति, इत्यप्युदाहार्यम् । **उपाच्च** ॥ उपपूर्वादपि रमेः परस्मैपदमित्यर्थः । उत्तरसूत्रे उपादित्यस्यैवानुवृत्तये व्याङ्पर्युपेभ्यो रमेरिति नोक्तम् । अत्र विरमतीत्यर्थे उपरमतीति नोदाहरणम् । तस्य अकर्मकतया उत्तरसूत्रेण परस्मैपदविकल्पविधानात् । अतस्सकर्मकमुदाहरति । **यज्ञदत्तमुपरमतीति** ॥ ननु विरामार्थकत्वात् कथ सकर्मकतेत्यत आह । **उपरमयतीत्यर्थः इति** ॥ ननु णिजभावात् कथमयमर्थो लभ्यते इत्यत आह । **अन्तर्भावितण्यर्थोऽयमिति** ॥ धातूनामनेकार्थत्वादिति भावः ।

## २७५१ । विभाषाऽकर्मकात् । (१-३-८५)

उपाद्रमेरकर्मकात्परस्मैपदं वा । उपरमति—उपरमते वा । निवर्तते इत्यर्थः ।

## २७५२ । बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः । (१-३-८६)

एभ्यो ण्यन्तेभ्यः परस्मैपदं स्यात् । 'णिचश्च' (सू २५६४) इत्यस्यापवादः । बोधयति पद्मम् । योधयति काष्ठानि । नाशयति दुःखम् । जनयति सुखम् । अध्यापयति । प्रावयति । प्रापयतीत्यर्थः । द्रावयति । विलापयतीत्यर्थः । स्रावयति । स्यन्दयतीत्यर्थः ।

## २७५३ । निगरणचलनार्थेभ्यश्च । (१-३-८७)

---

**विभाषाऽकर्मकात्** ॥ उपादिति रम इति परस्मैपदमिति चानुवर्तते । तदाह । **उपाद्रमेरिति** ॥ **बुधयुध** ॥ बुध युध नश जन इङ् प्रु द्रु स्रु एषान्द्वन्द्व । **बोधयति पद्ममिति** ॥ सूर्य इति शेष । बुधिर्विकसनार्थक । विकसति पद्मम् । तद्विकासयति सूर्य इत्यर्थः । 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति परस्मैपदन्तु न सिद्ध्यति । अणौ पद्मस्य कर्तृतया चित्तवत्कर्तृकत्वाभावात् । **योधयति काष्ठानीति** ॥ काष्ठानि युध्यन्ते स्वयमेव । तानि योधयतीत्यर्थः । अणावचित्तवत्कर्तृकत्वात् 'अणावकर्मकात्' इत्यस्य न प्राप्ति. । अत एव योधयाति देवदत्तमिति नोदाहृतम् । 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इत्येव सिद्धे. । एवमग्रेऽपि ज्ञेयम् । **नाशयति दुःखमिति** ॥ दुःख नश्यति । तन् नाशयाति हरिरित्यर्थः । **जनयति सुखमिति** ॥ जायते सुखम् । तत् जनयाति हरिरित्यर्थः । **अध्यापयतीति** ॥ अधीते वेद. स्वयमेव । तमध्यापयतीत्यर्थः । 'प्रु गतौ' इत्यस्योदाहरति । **प्रावयतीति** ॥ गत्यर्थकत्व मत्वा आह । **प्रापयतीत्यर्थः इति** ॥ **द्रावयतीति** ॥ द्रवत्याज्य तत् द्रावयतीत्यर्थ. । धातोर्द्रवीभावार्थकत्व मत्वा आह । **विलापयतीत्यर्थः इति** ॥ **स्रावयतीति** ॥ स्रवति जलम् । तत्स्रावयतीत्यर्थः । धातोः स्यन्दनार्थकत्व मत्वा आह । **स्यन्दयतीत्यर्थः इति** ॥ "प्रीति भक्तजनस्य यो जनयते" इत्यात्मनेपदन्तु प्रामादिकमेव । यद्वा भक्तजन. हरौ प्रीति जनयत्यात्मविषये तां हरिः जनयते इति ण्यन्ताण्णौ रूपम् । प्रयोज्यकर्तुः शेपत्वविवक्षया भक्तजनस्येति षष्ठीत्याहुः । **निगरण** ॥ निगरण भक्षणम् । चलनङ्कम्पनम् । एतदर्थकेभ्यो ण्यन्तेभ्यः परस्मैपदमित्यर्थः । पूर्वसूत्रे प्रुद्रुस्रूणाङ्ग्रहणन्तु अचलनार्थानामेव । अत एव मूले प्रापयतीत्यादि व्याख्यात पानमपि भक्षणमेव 'अपोऽश्नाति' इति श्रुतेः । अतएव 'न पादम्याङ्यमाङयस' इति सूत्रे पाग्रहणमर्थवत् । "न पीयतान्नाम चकोरजिह्वया कथञ्चिदेतन्मुखचन्द्रचान्द्रिका । इमाङ्क्मिाचामयसे न चक्षुषा चिरञ्चकोरस्य भवन्मुखस्पृशी ॥" इति श्रीहर्षश्लोके आचामयेति पृथक्पदम् । अः विष्णुः तस्याः स्त्री ईः लक्ष्मीः । तया सहिता से इत्येकारान्तस्य सेशब्दस्य सम्बोधनम् । 'एङ्ह्रस्वात्' इति सम्बुद्धिलोप

निगारयति । आशयति । भोजयति । चलयति । कम्पयति । 'अदे. प्रतिषेधः' (वा ९५९) । आदयते देवदत्तेन । 'गतिबुद्धि—' (सू ५४०) इति कर्मत्वम् 'आदिखाद्योर्न' (वा ११०९) इति प्रतिषिद्धम् । 'निगरण-चलन—' (सू २७५३) इति सूत्रेण प्राप्तस्यैवायं निषेधः । शेषादित्यकर्त्रभिप्राये परस्मैपदं स्यादेव । आदयत्यन्नं वटुना ।

## २७५४ । अणावकर्मकाच्चित्तवत्कर्तृकात् । (१-३-८८)

ण्यन्तात्परस्मैपदं स्यात् । शेते कृष्णस्तं गोपी शाययति ।

## २७५५ । न पादम्याङ्यमाङ्यसपरिमुह-रुचिनृतिवदवसः । (१-३-८९)

एभ्यो ण्यन्तेभ्यः परस्मैपदं न । पिबतिर्निगरणार्थः । इतरे चित्तवत्कर्तृकाकर्मकाः । नृतिश्चलनार्थोऽपि । तेन सूत्रद्वयेन प्राप्तिः । पाययते ।

इति व्याख्येयमिति प्रौढमनोरमाया स्थितम् । वस्तुतस्तु चक्षुषोर्मुखचन्द्रिकाकर्मकपानात्मकाचमनासम्भवादाचामिरादरे लाक्षणिकः । अतो निगरणार्थकत्वाभावान्न परस्मैपदम् । नचैवं सति 'प्रत्यवसानार्थकत्वाभावाच्चक्षुषो. 'गतिबुद्धि' इति कर्मत्वन्न स्यादिति शङ्क्यम् । न ह्याचामिरत्र केवले आदरे वर्तते । किन्तु दर्शनपूर्वकादरे वर्तते । सादरज्ञाने लाक्षणिक इति यावत् । ततश्च बुद्ध्यर्थकत्वादाचामेः चक्षुषोः कर्मत्वन्निर्बाधमित्यादि शब्देन्दुशेखरे प्रपञ्चितम् । **अदेः प्रतिषेधः इति** ॥ अदेर्ण्यन्तात् निगरणार्थकतया प्राप्तस्य परस्मैपदस्य प्रतिषेधो वक्तव्य इत्यर्थः । आदयते देवदत्तेनेत्यत्र अदेः प्रत्यवसानार्थत्वात् प्रयोज्यकर्तुर्देवदत्तस्य कर्मत्वमाशङ्क्य आह । **गतिबुद्धीति** ॥ नन्वादयत्यन्नं वटुनेति कथम् । निगरणार्थकतया प्राप्तस्य परस्मैपदस्य अदेः प्रतिषेधादित्यत आह । **निगरणचलनेति सूत्रेण प्राप्तस्यैवायन्निषेधः इति** ॥ ननु शेषात्कर्तरि इति प्राप्तस्येत्येवकारार्थं । 'अनन्तरस्य' इति न्यायादिति भावः । **अणावकर्मकात्** ॥ ण्यन्तादिति शेषपूरणम् । णेरित्यनुवृत्तेरिति भावः । अणौ यो धातुरकर्मकः चित्तवत्कर्तृकश्च तस्मात् ण्यन्तात्परस्मैपदमिति यावत् । चित्तवत्कर्तृकादिति किम् । व्रीहयः शुष्यन्ति तान् शोषयते । अकर्मकात्किम् । कटङ्करोति । त प्रयुङ्क्ते । कटङ्कारयते । **न पादम्याङ्यम्** ॥ पा दमि आङ्यम् आङ्यस परिमुह रुचि नृति वद वस् एषां समाहारद्वन्द्वात्पञ्चमी । प्राप्तस्य निषेध्यत्वात् प्राप्तिमुपपादयति । **पिबतिर्निगरणार्थः इति** ॥ ततश्च 'निगरणचलनार्थेभ्यः' इति प्राप्तिरिति भावः । **इतरे इति** ॥ दम्यादयः अणौ चित्तवत्कर्तृका अकर्मकाश्चेत्यर्थः । ततश्च 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति प्राप्तिरिति भावः । **नृतिरिति** ॥ नृतिश्चलनार्थकः । अणौ चित्तवत्कर्तृकः अकर्मकश्चेत्यर्थः । **सूत्रद्वयेनेति** ॥ 'अणावकर्मकात्' इति 'निगरणचलनार्थेभ्यश्च' इति च सूत्रद्वयेनेत्यर्थः । **पाययते इति** ॥ 'शाच्छासाह्वाव्यावेपां युक्' इति पुको-

दमयते । आयामयते । आयासयते । परिमोहयते । रोचयते । नर्तयते । वादयते । वासयते । 'धेट उपसङ्ख्यानम्' (वा ९६२) । 'धापयेते शिशुमेकं समीची' । अकर्त्रभिप्राये 'शेषात्—' (सू २१५९) इति परस्मैपदं स्यादेव । वत्सान्पाययति पयः । 'दमयन्ती कमनीयतामदम्' । भिक्षां वासयति । 'वा क्यषः' (२६६९) लोहितायति—लोहितायते । 'द्युद्भ्यो लुङि' (सू २३४५) । अद्युतत्—अद्योतिष्ट । 'वृद्भ्यः स्यसनोः' (२३४७) वर्त्स्यति । वर्तिष्यते । विवृत्सति । विवर्तिषते । 'लुटि च क्लृपः' (सू २३५१) । कल्प्ता । कल्प्तासि । कल्पितासे । कल्प्स्यति । कल्पिष्यते—कल्प्स्यते । चिक्लृप्सति—चिकल्पिषते—चिक्लृप्सते ।

इति तिङन्तपरस्मैपदप्रकरणम् ।

---

ऽपवादो युक् । **दमयते इति** ॥ 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्त्वाद्ध्रस्वः । ननु दिवादौ दमिस्सकर्मक इत्युक्तम् । अतः कथमिह 'अणावकर्मकात्' इति प्राप्तिरिति चेत् दमेः परस्मैपदनिषेधादेव दमिरकर्मकोऽपि । अतो दमिस्सकर्मक इत्यस्य न विरोधः । **आयामयते इति** ॥ 'यमोऽपरिवेषणे' इति मित्त्वनिषेधान्न ह्रस्वः । **वासयते इति** ॥ 'वस निवासे' इति भौवादिकस्यैवात्र ग्रहणम् । ननु 'वस आच्छादने' इत्यादादिकस्यापि । तस्य सकर्मकत्वादेवाप्राप्तेः । लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणमित्युक्तेश्च । **धेट उपसङ्ख्यानमिति** ॥ परस्मैपदनिषेधस्येति शेष. । धापयेते शिशुमिति मन्त्रः । ननु 'वत्सान् पाययति पयः'। 'दमयन्ती कमनीयतामदम्'। भिक्षा वासयतीति च कथम् । 'न पादम्याङयस' इति 'धेट.' इति च परस्मैपदस्य निषेधादित्यत आह । **अकर्त्रभिप्राये इति** ॥ 'अनन्तरस्य' इति न्यायेन 'निगरणचलनार्थेभ्यश्च, अणावकर्मकात्' इति सूत्रद्वयप्राप्तस्यैव 'न पादम्याङयमाङयस' इति 'धेट उपसङ्ख्यानम्' इति च निषेध इति भावः । 'वा क्यष·' इत्यादि प्राग्व्याख्यातमिति सूत्रक्रमेण पुनरुपात्तम् ॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां पदव्यवस्था समाप्ता ।

श्रीरस्तु ।

# ॥ अथ भावकर्मतिङ्प्रकरणम् ॥

अथ भावकर्मणोर्लडादयः । 'भावकर्मणोः' (सू २६७९) इति तङ्—

## २७५६ । सार्वधातुके यक् । (३-१-६१)

**धातोर्यक्प्रत्ययः स्याद्भावकर्मवाचिनि सार्वधातुके परे । भावो भावना उत्पादना क्रिया । सा च धातुत्वेन सकलधातुवाच्या भावार्थकलकारेणानूद्यते ।**

---

अथ भावकर्मतिङ्प्रकरण निरूप्यते ॥ 'लः कर्मणि' इत्यत्र सकर्मकेभ्यो धातुभ्य. कर्मणि कर्तरि च। अकर्मकेभ्यस्तु भावे कर्तरि च लकारा विहिता' । तेषु कर्तरि लकारा निरूपिताः । अथेदानीं भावकर्मणोर्लकारा निरूप्यन्ते इति प्रतिजानीते । **अथ भावकर्मणोर्लडादयः इति ॥** निरूप्यन्ते इति शेषः। तत्र 'शेषात्कर्तरि परस्मैपदम्, अनुपराभ्यां कृञः' इत्यादि परस्मैपदविधिषु प्राप्तेष्वाह । **भावकर्मणोरिति। तङिति ॥ सार्वधातुके यक्॥ धातोरिति ॥** 'धातोरेकाचः' इत्यतस्तदनुवृत्तेरिति भाव' । **भावकर्मवाचिनीति ॥** 'चिण्भावकर्मणो.' इत्यतस्तदनुवृत्तेरिति भावः । घटस्य भावो घटत्वमित्यादौ प्रकृतिजन्यबोधे प्रकारो भावः । कवेरय भाव इत्यादौ अभिप्रायः । "भावः पदार्थसत्तायां क्रियाचेष्टात्मयोनिषु । विद्वल्लीलास्वभावेषु भूत्यभिप्रायजन्तुषु" इति नानार्थरत्नमाला। 'भावस्सत्तास्वभावाभिप्रायचेष्टात्मजन्तुषु' इत्यमरः । इह तु 'लः कर्मणि' इत्यत्र भावशब्दो भावनाया यौगिक इत्याह। **भावो भावनेति ॥** 'लः कर्मणि' इत्यत्र भावशब्देन भावना विवक्षितेति भावः। भावनाशब्दस्य चिन्तायामपि प्रसिद्धत्वादाह । **उत्पादनेति ॥** उत्पत्त्यनुकूलो व्यापार इत्यर्थ. । एवञ्च भूधातोरुत्पत्त्यर्थकाद्धेतुमण्णौ वृद्ध्यावादेशयोः भाविशब्दात् 'एरच' इति भावे अचि णिलोपे भावशब्दः भावयतेरुत्पत्त्यर्थकाद्धेतुमण्ण्यन्तात् स्त्रियामित्यधिकारे 'ण्यासश्रन्थो युच्' इति युचि अनादेशे टापि भावनाशब्द इति बोध्यम्। उत्पादनाचेय धात्वर्थन्नातिरिच्यते इति दर्शयितुमाह । **क्रियेति ॥** धात्वर्थात्मकक्रियैव उत्पादनेत्यर्थः । तथाहि फलव्यापारयोर्धातुरिति सिद्धान्तः । पचधातोः पाकोऽर्थः । पाको विक्लित्त्यनुकूलव्यापारः । तत्र विक्लित्त्यशः फलम् । अधिश्रयणादिस्तदनुकूलो व्यापारः । तथाविधव्यापाराश्रयो देवदत्तादिः कर्ता । धातूपात्तव्यापाराश्रय. कर्तेति सिद्धान्तात् । अधिश्रयणादिव्यापारजन्या विक्लित्तिः फलम् । तदाश्रयत्वादोदन कर्म । व्यापारजन्यफलशालि कर्मेति सिद्धान्तात् । एव सकर्मकेषु सर्वत्र ज्ञेयम्। 'एध वृद्धौ' इत्यस्मिन्नकर्मकेऽपि वृद्ध्यनुकूलव्यापारो धात्वर्थः । नचैव सति एधते देवदत्त इत्यत्र धातूपात्तव्यापाराश्रयत्वाद्व्यापारजन्यवृद्धिरूपफलाश्रयत्वाच्च कर्तृत्व कर्मत्वञ्च स्यादिति वाच्यम् । धातूपात्तव्यापारजन्यतद्व्यापारव्यधिकरणफलाश्रयत्व कर्मत्व-